# अध्यक्षप्रचारः–द्वितीयाधिकरणम्

## द्वाविंशोऽध्यायः

### जनपदनिवेशः

भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहनेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत् । शूद्रकर्षकप्रायं कुलशतावरं पञ्चशतकुलपरं ग्रामं क्रोशद्विक्रोशसीमानमन्योन्यारक्षं निवेशयेत् । नदीशैलवनगृष्टिदरीसेतुबन्धशाल्मलीशमीक्षीरवृक्षानन्तेषुसीम्नां स्थापयेत् । अष्टशतग्राम्या मध्ये स्थानीयं, चतुश्शतग्राम्या द्रोणमुखं, द्विशतग्राम्या खार्वटिकं, दशग्रामीसङ्ग्रहेण सङ्ग्रहणं स्थापयेत् । अन्तेष्वन्तपालदुर्गाणि । जनपदद्वाराण्यन्तपालाधिष्ठितानि स्थापयेत् । तेषामन्तराणि वागुरिकशबरपुलिन्दचण्डालारण्यचरा रक्षेयुः । ऋत्विगाचार्यपुरोहितश्रोत्रियेभ्यो ब्रह्मदेयान्यदण्डकराण्याभिरूपदायकानि प्रयच्छेत् । अध्यक्षसङ्ख्यायकादिभ्यो गोपस्थानीकानीकस्थचिकित्सकाश्वदमकजङ्घाकरिकेभ्यश्च विक्रयाधानवर्जम् । करदेभ्यः कृतक्षेत्राण्यैकपुरुषिकाणि प्रयच्छेत् । अकृतानि कर्तृभ्यो नादेयात् । अकृषतामाच्छिद्यान्येभ्यः प्रयच्छेत्; ग्रामभृतकवैदेहका वा कृषेयुः । अकृषन्तोऽपहीनं दद्युः । धान्यपशुहिरण्यैश्चैनाननुगृह्णीयात्तान्यनुसुखेन दद्युः । अनुग्रहपरिहारौ चैभ्यः कोशवृद्धिकरौ दद्यात् । कोशोपघातिकौ वर्जयेत् । अल्पकोशो हि राजा पौरजानपदानेव ग्रसते । निवेशसमकालं यथागतकं वा परिहारं दद्यात् । निवृत्तपरिहारान् पितेवानुगृह्णीयात् ।

आकरकर्मान्तद्रव्यहस्तिवनव्रजवणिक्पथप्रचारान् वारिस्थलपथपण्यपत्तनानि च निवेशयेत् । सहोदकमाहार्योदकं वा सेतुं बन्धयेत् । अन्येषां वा बध्नतां भूमिमार्गवृक्षोपकरणानुग्रहं कुर्यात् । पुण्यस्थानारामाणां च । सम्भूय सेतुबन्धादपक्रामतः कर्मकरबलीवर्दाः कर्म कुर्युः । व्ययकर्मणि च भागी स्यात् । न चांशं लभेत । मत्स्यप्लवहरितपण्यानां सेतुषु राजा स्वाम्यं गच्छेत् । दासाहितकबन्धूनशृण्वतो राजा विनयं ग्राहयेत् । बालवृद्धव्याधितव्यसन्यनाथांश्च राजा बिभृयात् । स्त्रियमप्रजातां प्रजातायाश्चपुत्रान् । बालद्रव्यं ग्रामवृद्धा वर्ज (र्ध) येयुराव्यवहारप्रापणात्; देवद्रव्यं च । अपत्यदारान् मातापितरौ भ्रातॄनप्राप्तव्यवहा रान् भगिनीः कन्या विधवाश्चाबिभ्रतः शक्तिमतो द्वादशपणो दण्डोऽन्यत्र पतितेभ्यः अन्यत्र मातुः । पुत्रदारमप्रतिविधाय प्रव्रजतः पूर्वस्साहसदण्डः, स्त्रियं च प्रव्राजयतः । लुप्तव्यवायः प्रव्रजेदापृच्छ्य धर्मस्थानम् अन्यथा नियम्येत । वानप्रस्थादन्यः प्रव्रजितभावः, सुजातादन्यः सङ्घस्सामुत्थायकादन्यस्समयानुबन्धो वा नास्य जनपदमुपनिविशेत । न च तत्राराम विहारार्थाः शालास्स्युः । नटनर्तनगायनवादकवाग्जीवनकुशीलवा वा न कर्मविघ्नं कुर्युः, निराश्रयत्वात् ग्रामाणां, क्षेत्राभिरतत्वाच्च पुरुषाणां, कोशविष्टिद्रव्यधान्यरसवृद्धिर्भवतीति । परचक्राटवीग्रस्तं व्याधिदुर्भिक्षपीडितम् । देशं परिहरेद्राजा व्ययक्रीडाश्च वारयेत् ॥ दण्डविष्टिकराबाधैः रक्षेदुपहतां कृषिम् । स्तेनव्यालविषग्राहैः व्याधिभिश्च पशुव्रजान् ॥ वल्लभैः कार्मिकैस्स्तेनैरन्तपालैश्च पीडितम् । शोधयेत्पशुसङ्घैश्च क्षीयमाणं वणिक्पथम् ॥ एवं द्रव्यं द्विपवनं सेतुबन्धमथाकरान् । रक्षेत्पूर्वकृतान्राजा नवांश्चाभिप्रवर्तयेत् ॥ इत्यध्यक्षप्रचारे द्वितीयेऽधिकरणे जनपदनिवेशः प्रथमोऽध्यायः । आदितो द्वाविंशः ।

## त्रयोविंशोऽध्यायः

### भूमिच्छिद्रविधानम्

अकृष्यायां भूमौ पशुभ्यो विवीतानि प्रयच्छेत् । प्रदिष्टाभयस्थावरजङ्गमानि च ब्राह्मणेभ्यो ब्रह्मसोमारण्यानि तपोवनानि च, तपस्विभ्यो गोरुत पराणि प्रयच्छेत् । तावन्मात्रमेकद्वारं खातगुप्तं स्वादुफलगुल्मगुच्छमकण्टकिद्रुममुत्तान-तोयाशयं दान्तमृगचतुष्पदं भग्ननखदंष्ट्रव्यालं मार्गायुकहस्तिहस्तिनीकलभं मृगवनं विहारार्थं राज्ञः कारयेत् । सर्वातिथिमृगं प्रत्यन्ते चान्यन्मृगवनं भूमिवशेन वा निवेशयेत् । कुप्यप्रदिष्टानां च द्रव्याणामेकैकशो वा वनं निवेशयेत् । द्रव्यवनकर्मा-न्तानटवीश्च द्रव्यवनापाश्रयाः प्रत्यन्ते हस्तिवनमटव्या रक्षन् निवेशयेत् । नागवनाध्यक्षः पार्वतं नादेयं सारसमानूपं च नागवनं विदितपर्यन्तप्रवेशनिष्कसनं नागवनपालैः पालयेत् । हस्तिघातिनं हन्युः । दन्तयुगं स्वयंमृतस्याहरतः सपादच-तुष्पणो लाभः । नागवनपाला हस्तिपकपादपाशिकसैमिकवनचरकपारिकर्मिकसखा हस्तिमूत्रपुरीषच्छन्नगन्धा भल्लातकी-शाखाप्रतिच्छन्नाः पञ्चभिस्सप्तभिर्वा हस्तिबन्धकीभिः सह चरन्तः शय्यास्थानपद्यालण्डकूलपातोद्देशेन हस्तिकुलपर्यग्रं विद्युः । यूथचरमेकचरं निर्यूथं यूथपतिं हस्तिनं व्यालं मत्तं पोतं बद्धमुक्तं च निबन्धेन विद्युः । अनीकस्थप्रमाणैः प्रशस्त-व्यञ्जनाचारान् हस्तिनो गृह्णीयुः । हस्तिप्रधानो विजयो राज्ञाम् । परानीकव्यूहदुर्गस्कन्धावारप्रमर्दना ह्यतिप्रमाणशरीराः प्राणहरकर्माणो हस्तिन इति । कलिङ्गाङ्गगजाः श्रेष्ठाः प्राच्याश्चेति करूशजाः । दशार्णाश्चापरान्ताश्च द्विपानां मध्यमा मताः ॥ सौराष्ट्रिकाः पाञ्चनदास्तेषां प्रत्यवरास्मृताः । सर्वेषां कर्मणा वीर्यं जवस्तेजश्च वर्धते ॥ इत्यध्यक्षप्रचारे द्वितीयेऽधिकरणे भूमिच्छिद्रविधानं द्वितीयोऽध्यायः । आदितस्त्रयोविंशः.

---

## चतुर्विंशोऽध्यायः

### दुर्गविधानम्

चतुर्दिशं जनपदान्ते साम्परायिकं दैवकृतं दुर्गं कारयेत् । अन्तर्द्वीपं स्थलं वा, निम्नावरुद्धमौदकं, प्रास्तरं गुहां वा पार्वतं, निरुदकस्तम्बमिरिणं वा धान्वनं खञ्जनोदकं स्तम्बगहनं वा वनदुर्गं । तेषां नदीपर्वतदुर्गं जनपदारक्षस्थानं, धान्वनवनदुर्गमटवीस्थानं । आपद्यपसारो वा ।

जनपदमध्ये समुदयस्थानं स्थानीयं निवेशयेत् । वास्तुकप्रशस्ते देशे नदीसङ्गमे ह्रदस्य वा अविशोषस्याङ्के सरसस्तटाकस्य वा वृत्तं दीर्घं चतुरश्रं वा वास्तुकवशेन प्रदक्षिणोदकं पण्यपुटभेदनमंसवारिपथाभ्यामुपेतम् । तस्य परि-खास्तिस्रो दण्डान्तराः कारयेत् । चतुर्दश द्वादश दशेति दण्डान् विस्तीर्णाः विस्तारादवगाधाः पादोनमर्धं वा त्रिभागमूला मूले चतुरश्राः पाषाणोपहिताः पाषाणेष्टकाबद्धपार्श्वा वा तोयान्तिकीरागन्तुतोयपूर्णा वा सपरिवाहाः पद्मग्राहवतीः । चतुर्दण्डावकृष्टं परिखायाः षड्दण्डोच्छ्रितमवरुद्धं तद्द्विगुणविष्कम्भं खाताद्वप्रं कारयेत् । ऊर्ध्वचयं मञ्चपृष्ठं कुम्भकुक्षिकं वा हस्तिभिर्गोभिश्च क्षुण्णं कण्टकिगुल्मविषवल्लीप्रस्तानवन्तं पांसुशेषेण वास्तुच्छिद्रं वा पूरयेत् । वप्रस्योपरि प्राकारं विष्कम्भद्विगुणोत्सेधमैष्टकं द्वादशहस्तादूर्ध्वमोजं युग्मं वा आ चतुर्विंशतिहस्तादिति कारयेत् । रथचर्यासञ्चारं तालमूलमुरजकैः कपिशीर्षकैश्चाचिताग्रं पृथुशिलासहितं वा शैलं कारयेत् । न त्वेव काष्ठमयमग्निरवहितो हि तस्मिन् वसति । विष्कम्भचतुरस्रमट्टालकमुत्सेधसमावक्षेपसोपानं कारयेत् ॥ त्रिंशद्दण्डान्तरं च द्वयोरट्टालकयोर्मध्ये सहर्म्यद्वि-

तलामध्यर्धायामां प्रतोलीं कारयेत् । अट्टालकप्रतोलीमध्ये त्रिधानुष्काधिष्ठानं सपिधानच्छिद्रफलकसंहतमितीन्द्रकोशं कारयेत् । अन्तरेषु द्विहस्तविष्कम्भं पार्श्वे चतुर्गुणायाममनुप्राकारमष्टहस्तायतं देवपथं कारयेत् । दण्डान्तरा द्विदण्डान्तरा वा चार्याः कारयेत् । अग्राह्ये देशे प्रधावितिकां निष्कुहद्वारं च । बहिर्जानुभञ्जनीत्रिशूलप्रकरकूटावपातकण्टकप्रतिसराहिपृष्ठतालपत्रशृङ्गाटकश्वदंष्ट्रार्गलोपस्कन्दनपादुकाम्बरीषोदपानकैःछन्नपथं कारयेत् । प्राकारमुभयतो मण्डपकमध्यर्धदण्डं कृत्वा प्रतोलीषट्तुलान्तरं द्वारं निवेशयेत् । पञ्चदण्डादेकोत्तरवृद्ध्याष्टदण्डादिति चतुरस्रं द्विदंडं वा षड्भागमायामादधिकमष्टभागं वा । पञ्चदशहस्तादेकोत्तरमष्टादशहस्तादिति तुलोत्सेधः । स्तम्भस्य परिक्षेपाष्षडायामा द्विगुणो निखातः चूलिकायाश्चतुर्भागः ।

आदितलस्य पञ्च भागाः शाला वापी सीमागृहं च । दशभागिकौ समत्तवारणौ द्वौ प्रतिमञ्चौ अन्तरम् आणिः हर्म्यं च समुच्छ्रयादर्धतलं, स्थूणावबन्धश्च, आर्धवास्तुकमुत्तमागारं त्रिभागान्तरं वा, इष्टकावबद्धपार्श्वं, वामतः प्रदक्षिणसोपानं गूढभित्तिसोपानमितरतः । द्विहस्तं तोरणशिरः, त्रिपञ्चभागिकौ द्वौ कवाटयोगौ, द्वौ द्वौ परिघौ, अरत्निरिन्द्रकीलः- पञ्चहस्तमणिद्वारं, चत्वारो हस्तिपरिघाः । निवेशार्धं हस्तिनखः मुखसमस्सङ्क्रमोऽसंहार्यो वा भूमिमयो वा निरुदके ।

प्राकारसमं मुखमवस्थाप्य त्रिभागगोधामुखं गोपुरं कारयेत् । प्राकारमध्ये कृत्वा वापीं पुष्करिणीं द्वारं चतुश्शालमध्यर्धान्तराणीकं कुमारीपुरं मुण्डहर्म्यं द्वितलं मुण्डकद्वारं भूमिद्रव्यवशेन वा त्रिभागाधिकायामाः भाण्डवाहिनीः कुल्याः कारयेत् । तासु पाषाणकुद्दालकुठारीकाण्डकल्पनाः । मुसृण्ठि मुद्गरा दण्डचक्रयन्त्रशतघ्नयः ॥ कार्याः कार्मारिकाश्शूलवेधनाग्राश्च वेणवः । उष्ट्रग्रीव्योऽग्निसंयोगाः कुप्यकल्पे च यो विधिः ॥ इत्यध्यक्षप्रचारे द्वितीयेऽधिकरणे दुर्गविधानं तृतीयोऽध्यायः । आदितश्चतुर्विंशः ।

---

# पञ्चविंशोऽध्यायः



## दुर्गनिवेशः

त्रयः प्राचीना राजमार्गास्त्रय उदीचीना इति वास्तुविभागः । स द्वादशद्वारो युक्तोदकभूमिच्छन्नपथः चतुर्दण्डान्तरा रथ्याः । राजमार्गद्रोणमुखस्थानीयराष्ट्रविवीतपथाः संयानीयव्यूहश्मशानग्रामपथाश्चाष्टदण्डाः । चतुर्दण्डस्सेतुवनपथः । द्विदण्डो हस्तिक्षेत्रपथः । पञ्चारत्नयो रथपथश्चत्वारः पशुपथः । द्वौ क्षुद्रपशुमनुष्यपथः । प्रवीरे वास्तुनि राजनिवेशाः । चातुर्वर्ण्यसमाजीवे वास्तुहृदयादुत्तरे नवभागे यथोक्तविधानमन्तःपुरं प्राङ्मुखमुदङ्मुखं वा कारयेत् । तस्य पूर्वोत्तरं भागमाचार्यपुरोहितेज्यातोयस्थानं मन्त्रिणश्चावसेयुः । पूर्वदक्षिणं भागं महानसं हस्तिशाला कोष्ठागारं च । ततः परं गन्धमाल्यधान्यरसपण्याः प्रधानकारवः क्षत्रियाश्च पूर्वां दिशमधिवसेयुः । दक्षिणपूर्वं भागं भाण्डागारमक्षपटलं कर्मनिषद्याश्च । दक्षिणपश्चिमं भागं कुप्यगृहमायुधागारं च । ततः परं नगरधान्यव्यावहारिककार्मान्तिकबलाध्यक्षाः पक्वान्नसुरामांसपण्याः रूपाजीवास्तालावचरा वैश्याश्च दक्षिणां दिशामधिवसेयुः । पश्चिमदक्षिणं भागं खरोष्ट्रगुप्तिस्थानं कर्मगृहं च । पश्चिमोत्तरं भागं यानरथशालाः । ततः परमूर्णासूत्रवेणुचर्मवर्मशस्त्रावरणकारवश्शूद्राश्च पश्चिमां दिशमधिवसेयुः । उत्तरपश्चिमं भागं पण्यभैषज्यगृहम् । उत्तरपूर्वं भागं कोशो गवाश्वं च । ततः परं नगरराजदेवतालोहमणिकारवो ब्राह्मणाश्चोत्तरां दिशमाधिवसेयुः । वास्तुच्छिद्रानुशालेषु श्रेणीप्रवहणिकनिकाया आवसेयुः ।

अपराजिताप्रतिहतजयन्तवैजयन्तकोष्ठकान् शिववैश्रवणाश्विश्रीमदिरागृहं च पुरमध्ये कारयेत् । कोष्ठकालयेषु यथोद्देशं वास्तुदेवताः स्थापयेत् । ब्राह्मैन्द्रयाम्यसैनापत्यानि द्वाराणि बहिः परिखायाः धनुश्शतापकृष्टाश्चैत्यपुण्यस्थानवनसेतुबन्धाः कार्याः । यथादिशं च दिग्देवताः । उत्तरः पूर्वो वा श्मशानवाटः, दक्षिणेन वर्णोत्तमानाम् । तस्यातिक्रमे

पूर्वस्साहसदण्डः ॥ पाषण्डचण्डालानां श्मशानान्तेवासः ॥ कर्मान्तक्षेत्रवशेन वा कुटुम्बिनां सीमानं स्थापयेत् ॥ तेषु पुष्पफलवाटषण्डकेदारान् धान्यपण्यनिचयांश्च अनुज्ञाताः कुर्युः । दशकुलीवाटं कूपस्थानं सर्वस्नेहधान्यक्षारलवणभैषज्यशुष्कशाकयवसवल्लूरतृणकाष्ठलोहचर्माङ्गारस्नायुविषविषाणवेणुवल्कलसारदारुप्रहरणावरणाश्मनिचयाननेकवर्षोपभोगसहान् कारयेत् । नवेनानवं शोधयेत् ॥

हस्त्यश्वरथपादातमनेकमुख्यमवस्थापयेत् । अनेकमुख्यं हि परस्परभयात् परोपजापं नोपैतीति ॥ एतेनान्तपालदुर्गसंस्कारा व्याख्याताः ॥ न च बाहिरिकान्कुर्यात्पुरराष्ट्रोपघातकान् । क्षिपेज्जनपदस्यान्ते सर्वान्वा दापयेत्करान् ॥

इत्यध्यक्षप्रचारे दुर्गनिवेशः चतुर्थोऽध्यायः आदितः पञ्चविंशः ।

---

# षड्विंशोऽध्यायः

## सन्निधातृनिचयकर्म

सन्निधाता कोशगृहं पण्यगृहं कोष्ठागारं कुप्यगृहमायुधागारं बन्धनागारं च कारयेत् । चतुरस्रां वापीमनुदकोपस्नेहां खानयित्वा पृथुशिलाभिरुभयतः पार्श्वमूलं च प्रचित्य सारदारुपञ्जरं भूमिसमं त्रितलमनेकविधानं कुट्टिमदेशस्थानतलमेकद्वारं यन्त्रयुक्तसोपानं देवतापिधानं भूमिगृहं कारयेत् । तस्योपर्युभयतोनिषेधं सप्रीवमैष्टकं भाण्डवाहिनीपरिक्षिप्तं कोशगृहं कारयेत् प्रासादं वा । जनपदान्ते ध्रुवनिधिमापदर्थमाभित्यक्तैः, पुरुषैः कारयेत् । पक्वेष्टकास्तम्भं चतुश्शालमेकद्वारमनेकस्थानतलं, विवृतस्तम्भापसारमुभयतः पण्यगृहं, कोष्ठागारं च, दीर्घबहुसशालं कक्ष्यावृतकुड्यमन्तःकुप्यगृहं, तदेव भूमिगृहयुक्तमायुधागारं, पृथग्धर्मस्थीयं महामात्रीयं, विभक्तस्त्रीपुरुषस्थानमपसारतः सुगुप्तकक्ष्यं बन्धनागारं कारयेत् । सर्वेषां शालाखातोदपानवर्च स्नानगृहाग्निविषत्राणमार्जारनकुलारक्षाः स्वदैवपूजनवृत्तः कारयेत् । कोष्ठागारे वर्षमानमरत्निमुखं कुण्डं स्थापयेत् । तज्जातकरणाधिष्ठितः पुराणं नवं च रत्नं सारं फल्गुकुप्यं वा प्रतिगृह्णीयात् । तत्र रत्नोपधावुत्तमो दण्डः कर्तुः कारयितुश्च । सारोपधौ मध्यमः । फल्गुकुप्योपधौ तच्च तावच्च दण्डः । रूपदर्शकविशुद्धं हिरण्यं प्रतिगृह्णीयात् । अशुद्धं छेदयेत् । आहर्तुः पूर्वः साहसदण्डः । शुद्धं पूर्णमभिनवं च धान्यं प्रतिगृह्णीयात् । विपर्यये मूलाद्द्विगुणो दण्डः । तेन पण्यं कुप्यमायुधं च व्याख्यातम् । सर्वाधिकरणेषु युक्तोपयुक्ततत्पुरुषाणां पणादिचतुष्पणाः परमपहारेषु पूर्वमध्यमोत्तमवधा दण्डाः । कोशाधिष्ठितस्य कोशावच्छेदे घातः । तद्वैयावृत्यकाराणामर्धदण्डः । परिभाषणमविज्ञाते । चोराणामभिप्रधर्षणे चित्रो घातः । तस्मादाप्तपुरुषाधिष्ठितः सन्निधाता निचयाननुतिष्ठेत् बाह्यमाभ्यन्तरं चायं विद्याद्वर्षशतादपि । यथा पृष्टो न सज्यते व्ययशेषं च दर्शयेत । इत्यध्यक्षप्रचारे सन्निधातृनिचयकर्म पञ्चमोऽध्यायः आदितष्षड्विंशः

---

# सप्तविंशोऽध्यायः

## समाहर्तृसमुदयप्रस्थापनम्

समाहर्ता दुर्गं राष्ट्रं खनिं सेतुं वनं व्रजं वणिक्पथं चावेक्षेत । शुल्कं दण्डः पौतवं नागरिको लवणाध्यक्षो मुद्राऽध्यक्षः सुरा सूना सूत्रं तैलं घृतं क्षारः सौवर्णिकः पण्यसंस्था वेश्या द्यूतं वास्तुकं कारुशिल्पिगणो देवताध्यक्षो द्वारबाहि

रिकादेयं च दुर्गम् । सीता भागो बलिः करो वणिक् नदीपालस्तरो नावः पट्टनं विवीतं वर्तनी रज्जूश्चोररज्जूश्च राष्ट्रम् । सुवर्णरजतवज्रमणिमुक्ताप्रवाळशङ्खलोहलवणभूमिप्रस्तररसधातवः खनिः ॥ पुष्पफलवाटषण्डकेदारमूलवापास्सेतुः । पशुमृगद्रव्यहस्तिवनपरिग्रहो वनम् । गोमहिषमजाविकं खरोष्ट्रमश्वाश्वतराश्च व्रजः । स्थलपथो वारिपथश्च वणिक्पथः । इत्यायशरीरम्। मूलं भागो व्याजी परिघः क्लृप्तं रूपिकमत्ययश्चायमुखम् । देवपितृपूजादानार्थं स्वस्तिवाचनमन्तःपुरं महानसं दूतप्रावर्तिमं कोष्ठागारमायुधागारं पण्यगृहं कुप्यगृहं कर्मान्तो विष्टिः पत्त्यश्वरथद्विपपरिग्रहो गोमण्डलं पशुमृगपक्षिव्यालवाटाः काष्ठतृणवाटश्चेति व्ययशरीरम्।राजवर्षं मासः पक्षो दिवसश्च व्युष्टं वर्षाहेमन्तग्रीष्माणां तृतीयसप्तमा दिवसोनाः पक्षाश्शेषा पूर्णा पृथगधिमासक इति कालः । करणीयं सिद्धं शेषमायव्ययौ नीवी च । संस्थानं प्रचारश्शरीरावस्थापनमादानं सर्वसमुदयपिण्डः सञ्जातमेतत्करणीयम् । कोशार्पितं राजहारः पुरव्ययश्चप्रविष्टं परमसंवत्सरानुवृत्तं शासनमुक्तं मुखाज्ञप्तं चापातनीयमेतात्सिद्धम् । सिद्धिप्रकर्मयोगः दण्डशेषमाहरणीयं बलात्कृतप्रतिस्तब्धमव सृष्टं च प्रशोध्यमेतच्छेषमसारमल्पसारं च । वर्तमानः पर्युषितोऽन्यजातश्चायः । दिवसानुवृत्तो वर्तमानः । परमसांवत्सरिकः परप्रचारः सङ्क्रान्तो वा पर्युषितः । नष्टप्रस्मृतमायुक्तदण्डः पार्श्वं पारिहीणिकमौपायनिकं डमरगतकस्वमपुत्रकं निधिश्चान्यजातः । विक्षेपव्याधितान्तरारम्भशेषश्च व्ययप्रत्यायः । विक्रये पण्यानामर्घवृद्धिरूपजा मानोन्मानविशेषो व्याजी क्रयसङ्घर्षे वा वृद्धिरित्यायः । नित्यो नित्योत्पादिको लाभो लाभोत्पादिक इति व्ययः । दिवसानुवृत्तो नित्यः । पक्षमाससंवत्सरलाभो लाभः । तयोरुत्पन्नो नित्योत्पादिको लाभोत्पादिक इति । व्ययसंजातादायव्ययविशुद्धा नीवी प्राप्ता चानुवृत्ता चेति । एवं कुर्यात्समुदयं वृद्धिं चायस्य दर्शयेत् । ह्रासं व्ययस्य च प्राज्ञस्साधयेच्च विपर्ययम् ॥ इत्यध्यक्षप्रचारे समाहर्तृसमुदयप्रस्थापनं षष्ठोऽध्यायः आदितः सप्तविंशः ।

---

## अष्टाविंशोऽध्यायः



### अक्षपटले गाणनिक्याधिकारः

अक्षपटलमध्यक्षः प्राङ्मुखमुदङ्मुखं वा विभक्तोपस्थानं निबन्धपुस्तकस्थानं कारयेत् । तत्राधिकरणानां सङ्ख्याप्रचारसञ्जाताग्रं कर्मान्तानां द्रव्यप्रयोगे वृद्धिक्षयव्ययप्रयामव्याजीयोगस्थानवेतनविष्टिप्रमाणं, रत्नसारफल्गुकुप्यानामर्घप्रतिवर्णकप्रतिमानमानोन्मानावमानभाण्डं देशग्रामजातिकुलसंघानां धर्मव्यवहारचरित्रसंस्थानं, राजोपजीविनां प्रग्रहप्रदेशभोगपरिहारभक्तवेतनलाभं, राज्ञश्च पत्नीपुत्राणां रत्नभूमिलाभं निर्देशोत्पादिकप्रतीकारलाभं, मित्रामित्राणां च सन्धिविक्रमप्रदानादानं, निबन्धपुस्तकस्थं कारयेत् । ततस्सर्वाधिकरणानां करणीयं सिद्धं शेषमायव्ययौ नीवीमुपस्थानं प्रचारचरित्रसंस्थानं च निबन्धेन प्रयच्छेत् । उत्तममध्यमावरेषु च कर्मसु तज्जातिकमध्यक्षं कुर्यात् । सामुदायिकेष्ववक्लृप्तिकं यमुपहत्य न राजाऽनुतप्येत । सहग्राहिणः प्रतिभुवः कर्मोपजीविनः पुत्रा भ्रातरो भार्या दुहितरो भृत्याश्चास्य कर्मच्छेदं वहेयुः । त्रिशतं चतुःपञ्चाशच्चाहोरात्राणां कर्म संवत्सरः । तमाषाढीपर्यवसानमूनं पूर्णं वा दद्यात् । करणाधिष्ठितमधिमासकं कुर्यात् । अपसर्पाधिष्ठितं च प्रचारं प्रचारंचरित्रसंस्थानान्यनुपलभमानो हि प्रकृतस्समुदयमज्ञानेन परिहापयति, उत्थानक्लेशासहत्वादालस्येन, शब्दादिष्विन्द्रियार्थेषु प्रमादेन, सङ्क्रोशाधर्मानर्थभीरुर्भयेन, कार्यार्थिष्वनुग्रहबुद्धिः कामेन, हिंसाबुद्धिः कोपेन, विद्याद्रव्यवल्लभमापाश्रयाद्दर्पेण, तुलाम नतर्कगाणिकान्तरोपधानाल्लोभेन । तेषां आनुपूर्व्या ' यावानर्थोपघातः तावानेकोत्तरो दण्डः " इति मानवाः । " सर्वत्राष्टगुणः " इति पराशराः । " दशगुणः " इति बार्हस्पत्याः । " विंशतिगुणः " इत्यौशनसाः । " यथाऽपराधम् " इति कौटिल्यः

गाणनिक्यान्याषाढीमागच्छेयुः । आगतानां समुद्रपुस्तभाण्डनीवीकानामेकत्र सम्भाषावरोधं कारयेत् । आयव्ययनीवीनामग्राणि श्रुत्वा नीवीमवहारयेत् । यच्चाग्रादायस्यान्तरवर्णे नीव्या वर्धेत, व्ययस्य वा यत्परिहापयेत्, तदष्टगुणमध्यक्षं

दापयेत् । विपर्यये तमेव प्रतिस्यात् । यथाकालमनागतानामपुस्तनीविकानां वा देयदशबन्धो दण्डः । कार्मिके चोपस्थिते कारणिकस्याप्रतिबध्नतः पूर्वस्साहसदण्डः । विपर्यये कार्मिकस्य द्विगुणः । प्रचारसमं महामात्रास्समग्राः श्रावयेयुस्स अविषममात्राः । पृथग्भूतो मिथ्यावादी चैषामुत्तमदण्डं दद्यात् । अकृताहोरूपहरं मासमाकाङ्क्षेत । मासादूर्ध्वं मासद्विशतोत्तरं दण्डं दद्यात् । अल्पशेषलेख्यनीविकं पञ्चरात्रमाकाङ्क्षेत । ततः परं कोशपूर्वमहोरूपहरं धर्मव्यवहारचरित्रसंस्थानसङ्कलननिर्वर्तनानुमानचारप्रयोगैरवेक्षेत । दिवसपञ्चरात्रपक्षमासचातुर्मास्यसंवत्सरैश्च प्रति समानयेत् । व्युष्टदेशकालमुखोत्पत्त्यनुवृत्तिप्रमाणदायकदापकनिबन्धकप्रतिग्राहकैश्चायं समानयेत् । व्युष्टदेशकालमुखलाभकारणदेययोगपरिमाणाज्ञापकोद्धारकनिधातृकप्रतिग्राहकैश्च व्ययं समानयेत् । व्युष्टदेशकालमुखानुवर्तनरूपलक्षणपरिमाणनिक्षेपभाजनगोपायकैश्च नीवीं समानयेत् ॥ राजार्थेऽर्थकारणिकस्याप्रतिबध्नतः प्रतिषेधयतो वाऽऽज्ञां निबन्धादायव्ययमन्यथा वा विकल्पयतः पूर्वस्साहसदण्डः ॥ क्रमावहीनमुत्क्रममविज्ञातं पुनरुक्तं वा वस्तुकमवलिखतो द्वादशपणो दण्डः ॥ नीवीमवलिखतो द्विगुणः । भक्षयतोऽष्टगुणः । नाशयतः पञ्चबन्धः प्रतिदानं च । मिथ्यावादे स्तेयदण्डः । पश्चात् प्रतिज्ञाते द्विगुणः प्रस्मृतोत्पन्ने च—अपराधं सहेतात्यं तुष्येदल्पेऽपि चोदये । महोपकारं चाध्यक्षं प्रग्रहेणाभिपूजयेत् । इत्यध्यक्षप्रचारे अक्षपटले गाणनिक्याधिकारः सप्तमोऽध्यायः आदितोऽष्टाविंशः.

---

# एकोनत्रिंशोऽध्यायः



## समुदयस्य युक्तापहृतस्य प्रत्यानयनम्

कोशपूर्वास्सर्वारम्भाः ॥ तस्मात्पूर्वं कोशमवेक्षेत ॥ प्रचारसमृद्धिश्चरित्रानुग्रहश्चोरग्रहो युक्तप्रतिषेधः सस्यसम्पत्पण्यबाहुल्यमुपसर्गप्रमोक्षः परिहारक्षयो हिरण्योपायनमिति कोशवृद्धिः । प्रतिबन्धः प्रयोगो व्यवहारोऽवस्तारः परिहापणमुपभोगः परिवर्तनमपहारश्चेति कोशक्षयः ॥ सिद्धीनामसाधनमनवतारणमप्रवेशनं वा प्रतिबन्धः । तत्र दशबन्धो दण्डः ॥ कोशद्रव्याणां वृद्धिप्रयोगः प्रयोगः । पण्यव्यवहारो व्यवहारः । तत्र फलद्विगुणो दण्डः ॥ सिद्धं कालमप्राप्तं करोत्यप्राप्तं प्राप्तं वेत्यवस्तारः । तत्र पञ्चबन्धो दण्डः ॥ क्लृप्तमायं परिहापयति व्ययं वा विवर्धयतीति परिहापणं । तत्र हीनचतुर्गुणो दण्डः । स्वयमन्यैर्वा राजद्रव्याणामुपभोजनमुपभोगः । तत्र रत्नोपभोगे घातः; सारोपभोगे मध्यमस्साहसदण्डः, फल्गुकुप्योपभोगे तच्च तावच्च दण्डः ॥ राजद्रव्याणामन्यद्रव्येणादानं परिवर्तनं; तदुपभोगेन व्याख्यातम् ॥ सिद्धमायं न प्रवेशयति; निबद्धं व्ययं न प्रयच्छति, प्राप्तां नीवीं विप्रतिजानीत इत्यपहारः । तत्र द्वादशगुणो दण्डः ॥ तेषां हरणोपायाश्चत्वारिंशत्—

पूर्वं सिद्धं पश्चादवतारितं; पश्चात्सिद्धं पूर्वमवतारितं; साध्यं न सिद्धं; असाध्यं सिद्धं; सिद्धमसिद्धं कृतं; असिद्धं सिद्धं कृतम्; अल्पसिद्धं बहुकृतं; बहुसिद्धमल्पं कृतम्; अन्यत् सिद्धमन्यत्कृतं; अन्यतस्सिद्धमन्यतः कृतं; देयं न दत्तं; अदेयं दत्तं; काले न दत्तं; अकाले दत्तं; अल्पं दत्तं बहुकृतं; बहुदत्तमल्पं कृतं; अन्यद्दत्तमन्यत्कृतं; अन्यतो दत्तमन्यतः कृतं; प्रविष्टमप्रविष्टं कृतं; अप्रविष्टं प्रविष्टं कृतं; कुप्यमदत्तमूल्यं प्रविष्टम्; दत्तमूल्यं न प्रविष्टं; सङ्क्षेपो विक्षेपः कृतः, विक्षेपः सङ्क्षेपो वा; महार्घमल्पार्घेण परिवर्तितं; अल्पार्घं महार्घेण वा; समारोपितोऽर्घः; प्रत्यवरोपितो वा; रात्रयः समारोपिता वा प्रत्यवरोपिता वा; संवत्सरो मासविषमः कृतः, मासो दिवसविषमो वा; समागमविषमः मुखविषमः धार्मिकविषमः; निर्वर्तनाविषमः, पिण्डविषमः वर्णविषमः अर्घविषमः; मानविषमः मापनविषमः; भाजनविषमः इति हरणोपायाः ।

तत्रोपयुक्तनिधायकनिबन्धकप्रतिग्राहकदायकदापकमन्त्रिवैयावृत्यकरानेकैकशोऽनुयुञ्जीत । मिथ्यावादे चैषां युक्तसमो दण्डः । प्रचारे चावघोषयेत्—“अमुना प्रकृतेनोपहताः प्रज्ञापयन्त्विति” । प्रज्ञापयतो यथोपघातं दापयेत् ।

अनेकेषु चाभियोगेष्वपव्ययमानस्सकृदेव परोक्तः सर्वं भजेत । वैषम्ये सर्वत्रानुयोगं दद्यात् । महत्यर्थापहारे चाल्पेनापि सिद्धस्सर्वं भजेत । कृतप्रतिघातावस्थः सूचको निष्पन्नार्थष्षष्ठमंशं लभेत । द्वादशमंशं भृतकः । प्रभूताभियोगादल्पनिष्पत्तौ निष्पन्नस्यांशं लभेत । अनिष्पन्ने शारीरं हैरण्यं वा दण्डं लभेत । न चानुग्राह्यः । निष्पत्तौ निक्षिपेद्वादमात्मानं वाऽपवाहयेत् । अभियुक्तोपजापात्तु सूचको वधमाप्नुयात् ॥ इत्यध्यक्षप्रचारे समुदयस्य युक्तापहृतस्य प्रत्यानयनं अष्टमोऽध्यायः । आदितः एकोनत्रिंशः ।

---

# त्रिंशोऽध्यायः



## उपयुक्तपरीक्षा

अमात्यसम्पदोपेतास्सर्वाध्यक्षाश्शक्तितः कर्मसु नियोज्याः । कर्मसु चैषां नित्यं परीक्षां कारयेत् । चित्तानित्यत्वान्मनुष्याणाम् । अश्वसधर्माणो हि मनुष्या नियुक्ताः कर्मसु विकुर्वते । तस्मात्कर्तारं करणं देशं कालं कार्यं प्रक्षेपमुदयं चैषु विद्यात् । ते यथासन्देशमसंहता अविगृहीताः कर्माणि कुर्युः । संहता भक्षयेयुः । विगृहीता विनाशयेयुः । न चानिवेद्य भर्तुः किञ्चिदारम्भं कुर्युरन्यत्रापत्प्रतीकारेभ्यः । प्रमादस्थानेषु चैषामत्ययं स्थापयेद्दिवसवेतनव्ययाद्द्विगुणम् । यश्चैषां यथाऽऽदिष्टमर्थं सविशेषं वा करोति स स्थानमानौ लभेत ।

" अल्पायतिश्चेन्महाव्ययो भक्षयति । विपर्यये, यथाऽऽति–व्ययश्च न भक्षयति ' इत्याचार्याः । अपसर्पेणैवोपलभ्यते " इति कौटिल्यः । यस्समुदयं परिहापयति स राजार्थं भक्षयति । स चेदज्ञानादिभिः परिहापयति तदेनं यथागुणं दापयेत् । यस्समुदयं द्विगुणमुद्भावयति स जनपदं भक्षयति । स चेद्राजार्थमुपनयत्यल्पापराधे वारयितव्यः; महति यथाऽपराधं दण्डयितव्यः । यस्समुदयं व्ययमुपनयति स पुरुषकर्माणि भक्षयति । सकर्मदिवसद्रव्यमूल्यपुरुषवेतनापहारेषु यथाऽपराधं दण्डयितव्यः । तस्मादस्य यो यस्मिन्नधिकरणे शासनस्थः स तस्य कर्मणो याथातथ्यमायव्ययौ च व्याससमासाभ्यामाचक्षीत । मूलहरतादात्विककदर्यांश्च प्रतिषेधयेत् । यः पितृपैतामहमर्थमन्यायेन भक्षयति, स मूलहरः । यो यद्यदुत्पद्यते तत्तद्भक्षयति स तादात्विकः । यो भृत्यात्मपीडाभ्यामुपचिनोत्यर्थं स कदर्यः । स पक्षवांश्चेदनादेयः; विपर्यये पर्यादातव्यः । यो महत्यर्थसमुदये स्थितः कदर्यस्सन्निधत्ते, अवनिधत्ते, अवस्रावयति वा—सन्निधत्ते स्ववेश्मनि, अवनिधत्ते पौरजानपदेषु, अवस्रावयति परविषये,—तस्य सत्री मन्त्रिमित्रभृत्यबन्धुपक्षमागतिं गतिं च द्रव्याणामुपलभेत । यश्चास्यपर विषये सञ्चारं कुर्यात्तमनुप्रविश्य मन्त्रं विद्यात् । सुविदिते शत्रुशासनापदेशेनैनं घातयेत् । तस्मादस्याध्यक्षाः सङ्ख्यायकलेखकरूपदर्शकनीवीग्राहकोत्तराध्यक्षसखाः कर्माणि कुर्युः । उत्तराध्यक्षाः—हस्त्यश्वरथारोहास्तेषामन्तेवासिनश्शिल्पशौचयुक्तास्सङ्ख्यायकादीनामपसर्पाः । बहुमुख्यमनित्यं चाधिकरणं स्थापयेत् । यथा ह्यनास्वादयितुं न शक्यं जिह्वातलस्थं मधु वा विषं वा । अर्थस्तथा ह्यर्थचरेण राज्ञः स्वल्पोऽप्यनास्वादयितुं न शक्यः । मत्स्या यथाऽन्तस्सलिले चरन्तो ज्ञातुं न शक्याः सलिलं पिबन्तः । युक्तास्तथा कार्यविधौ नियुक्ताः ज्ञातुं न शक्या धनमाददानाः । अपि शक्या गतिर्ज्ञातुं पततां खे पतत्रिणाम् । न तु प्रच्छन्नभावानां युक्तानां चरतां गतिः । आस्रावयेच्चोपचितान् विपर्यस्येच्च कर्मसु । यथा न भक्षयन्त्यर्थं भक्षितं निर्वमन्ति वा । न भक्षयन्ति ये त्वर्थान्न्यायतो वर्धयन्ति च । नित्याधिकाराः कार्यास्ते राज्ञः प्रियहिते रताः । इत्यध्यक्षप्रचारे उपयुक्तपरीक्षा नवमोऽध्यायः आदितस्त्रिंशः ।

---

# एकत्रिंशोऽध्यायः



## शासनाधिकारः

शासने शासनमित्याचक्षते । शासनप्रधाना हि राजानः, तन्मूलत्वात् सन्धिविग्रहयोः । तस्मादमात्यसम्पदोपेतः सर्वसमयविदाशुग्रन्थश्चार्वक्षरो लेखवाचनसमर्थो लेखकः स्यात् । सोऽव्यग्रमना राज्ञस्सन्देशं श्रुत्वा निश्चितार्थं, लेखं विदध्यात् । देशैश्वर्य वंशानामधेयोपचारमीश्वरस्य, देशनामधेयोपचारमनीश्वरस्य । जातिं कुलं स्थानवयश्श्रुतानि कर्मर्द्धिशीलान्यथ देशकालौ । यौनानुबन्धं च समीक्ष्य कार्ये लेखं विदध्यात्पुरुषानुरूपम् ॥ अर्थक्रमः, सम्बन्धः, परिपूर्णता, माधुर्यमौदार्यं, स्पष्टत्वमिति लेखसम्पत् । तत्र यथावदनुपूर्वक्रियाप्रधानस्यार्थस्य पूर्वमभिनिवेश इत्यर्थस्य क्रमः ॥ प्रस्तुतस्यार्थस्यानुपरोधादुत्तरस्य विधानमासमाप्तेरिति सम्बन्धः ॥ अर्थपदाक्षराणामन्यूनातिरिक्तता हेतूदाहरणदृष्टान्तैरर्थोपवर्णनाऽश्रान्तपदतेति परिपूर्णता ॥ सुखोपनीतचार्वर्थशब्दाभिधानं माधुर्यम् ॥ अग्राम्यशब्दाभिधानमौदार्यम् ॥ प्रतीतशब्दप्रयोगस्स्पष्टत्वमिति ॥ अकारादयो वर्णाः त्रिषष्टिः ॥ वर्णसङ्घातः पदम् । तच्चतुर्विधं नामाख्यातोपसर्गनिपाताश्चेति । तत्र नाम सत्त्वाभिधायि । अविशिष्टलिङ्गमाख्यातं क्रियावाचि । क्रियाविशेषकाः प्रादय उपसर्गाः । अव्ययाश्चादयो निपाताः ॥ पदसमूहो वाक्यमर्थपरिसमाप्तौ; एकपदावरस्त्रिपदपरः परपदार्थानुरोधेन वर्गः कार्यः । लेखपरिसंहरणार्थ इति शब्दो वाचिकमस्येति च ॥ निन्दा प्रशंसा पृच्छा च तथाऽऽख्यानमथार्थना । प्रत्याख्यानमुपालम्भः प्रतिषेधोऽथ चोदना ॥ सान्त्वमभ्यवपत्तिश्च भर्त्सनानुनयौ तथा । एतेष्वर्थाः प्रवर्तन्ते त्रयोदशसु लेखजाः ॥

तत्राभिजनशरीरकर्मणां दोषवचनं निन्दा । गुणवचनमेतेषामेव प्रशंसा । " कथमेतादिति " पृच्छा । " एवम् " इत्याख्यानम् । देहीत्यर्थना । न प्रयच्छामि इति प्रत्याख्यानम् ॥ अननुरूपं भवत इत्युपालम्भः । " मा कार्षीः " इति प्रतिषेधः । " इदं क्रियताम् " इति चोदना । " योऽहं स भवान्, मम यद्द्रव्यं तद्भवतः " इत्युपग्रहः सान्त्वम् । व्यसनसाहाय्यमभ्यवपत्तिः । सदोषमायतिप्रदर्शनमभिभर्त्सनम् । अनुनयस्त्रिविधोऽर्थकृतावतिक्रमे पुरुषादिव्यसने चेति । प्रज्ञापनाज्ञापरिदानलेखाः तथा परीहारनिसृष्टिलेखौ । प्रावृत्तिकश्च प्रतिलेख एव सर्वत्रगश्चेति हि शासनानि ॥ अनेन विज्ञापितमेवमाह तद्दीयतां चेद्यदि तत्त्वमस्ति । राज्ञस्समीपे वरकारमाह प्रज्ञापनैषा विविधोपदिष्टा ॥ भर्तुराज्ञा भवेद्यत्र निग्रहानुग्रहौ प्रति । विशेषेण तु भृत्येषु तदाज्ञालेखलक्षणम् ॥ यथार्हगुणसंयुक्ता पूजा यत्रोपलक्ष्यते । अप्याधौ परिदाने वा भवतस्तावुपग्रहौ ॥ जातेर्विशेषेषु पुरेषु चैव ग्रामेषु देशेषु च तेषु तेषु । अनुग्रहो यो नृपतेर्निदेशात् । तज्ज्ञः परीहार इति व्यवस्येत् । निसृष्टिस्थापना कार्या करणे वचने तथा । एष वाचिकलेखस्स्यात् भवेन्नैसृष्टिकोऽपि वा ॥ विविधां दैवसंयुक्तां तत्त्वजां चैव मानुषीम् । विविधां तां व्यवस्यन्ति प्रवृत्तिं शासनं प्रति ॥ दृष्ट्वा लेखं यथातत्त्वं ततः प्रत्यनुभाष्य च । प्रतिलेखो भवेत्कार्यो यथा राजवचस्तथा ॥ यत्रेश्वरांश्चाधिकृतांश्च राजा रक्षोपकारौपथिकार्थमाह । सर्वत्रगो नाम भवेत्स मार्गे देशे च सर्वत्र च वेदितव्यः ॥

उपायास्सामोपप्रदानभेददण्डाः । तत्र सामं पञ्चविधं—गुणसङ्कीर्तनं सम्बन्धोपाख्यानं परस्परोपकारसन्दर्शनमायतिप्रदर्शनमात्मोपनिधानमिति । तत्राभिजनशरीरकर्मप्रकृतिश्रुतद्रव्यादीनां गुणागुणग्रहणं प्रशंसास्तुतिर्गुणसङ्कीर्तनम् । ज्ञातियौनमौखस्रौवकुलहृदयमित्रसङ्कीर्तनं सम्बन्धोपाख्यानम् स्वपक्षपरपक्षयोरन्योन्योपकारसङ्कीर्तनं परस्परोपकारसन्दर्शनम् । अस्मिन्नेवं कृत इदमावयोर्भवतीत्याशाजननमायतिप्रदर्शनम् । " योऽहं स भवान्यन्मम द्रव्यं तद्भवता स्वकृत्येषु प्रयोज्यताम् " इत्यात्मोपनिधानमिति । उपप्रदानमर्थोपकारः । शङ्काजननं निर्भर्त्सनं च भेदः । वधः परिक्लेशोऽर्थहरणं दण्ड इति । अकान्तिर्व्याघातः पुनरुक्तमपशब्दः सम्प्लव इति लेखदोषाः । तत्रकालपत्रकमचारुविषमविरागाक्षरत्वम-

कान्तिः। पूर्वेण पश्चिमस्यानुपपत्तिर्व्याघातः। उक्तस्याविशेषेण द्वितीयमुच्चारणं पुनरुक्तम्। लिङ्गवचनकालकारकाणामन्यथाप्रयोगोऽपशब्दः। अवर्गे वर्गकरणं वर्गे चावर्गक्रिया गुणविपर्यासस्संप्लव इति। सर्वशास्त्राण्यनुक्रम्य प्रयोगमुपलभ्य च। कौटिल्येन नरेन्द्रार्थे शासनस्य विधिः कृतः। इत्यध्यक्षप्रचारे शासनाधिकारः दशमोऽध्यायः आदित एकत्रिंशः।

---

# द्वात्रिंशोऽध्यायः



## कोशप्रवेश्यरत्नपरीक्षा

कोशाध्यक्षः कोशप्रवेश्यं रत्नं सारं फल्गु कुप्यं वा तज्जातकरणाधिष्ठितः प्रतिगृह्णीयात्। ताम्रपर्णिकं पाण्ड्यकवाटकं, पाशिक्यं, कौलेयं, चौर्णेयं, माहेन्द्रं, कार्दमिकं, स्रौतसीयं, ह्रादीयं, हैमवतं च मौक्तिकम्। शुक्तिः शङ्खः प्रकीर्णकं च योनयः। मसूरकं त्रिपुटकं कूर्मकमर्धचन्द्रकं कञ्चुकितं यमकं कर्तकं खरकं सिक्थकं कामण्डलुकं श्यावं नीलं दुर्विद्धं चाप्रशस्तम्। स्थूलं वृत्तं निस्तलं भ्राजिष्णु श्वेतं गुरु स्निग्धं देशविद्धं च प्रशस्तम्। शीर्षकमुपशीर्षकं प्रकाण्डकमवघाटकं तरलप्रतिबन्धं चेति यष्टिप्रभेदाः। यष्टीनामष्टसहस्रमिन्द्रच्छन्दः। ततोऽर्धं विजयच्छन्दः शतं देवच्छन्दः। चतुष्षष्टिरर्धहारः। चतुष्पञ्चाशद्रश्मिकलापः। द्वात्रिंशद्गुच्छः। सप्तविंशतिर्नक्षत्रमाला। चतुर्विंशतिरर्धगुच्छः। विंशतिर्माणवकः। ततोऽर्धमर्धमाणवकः। एत एव मणिमध्यास्तन्माणवका भवन्ति। एकशीर्षकश्शुद्धो हारः। तद्वच्छेषाः॥ मणिमध्योऽर्धमाणनकः त्रिफलकः फलकहारः पञ्चफलको वा। सूत्रमेकावली शुद्धा। सैव मणिमध्या यष्टिः। हेममणिचित्रा रत्नावली। हेममणिमुक्तान्तरोऽपवर्तकः। सुवर्णसूत्रान्तरं सोपानकम्। मणिमध्यं वा मणिसोपानकं। तेन शिरोहस्तपादकटीकलापजालकविकल्पा व्याख्याताः। मणिः कौटो मालेयकः पारसमुद्रकश्च। सौगन्धिकः, पद्मरागः, अनवद्यरागः, पारिजातपुष्पकः बालसूर्यकः।

वैडूर्यः—उत्पलवर्णः शिरीषपुष्पक उदकवर्णो वंशरागः शुकपत्रवर्णः पुष्यरागो गोमूत्रको गोमेदकः॥ नीलावलीय इन्द्रनीलः कलायपुष्पको महानीलो जाम्बवाभो जीमूतप्रभो नन्दकः स्रवन्मध्यः। शुद्धस्फटिको मूलाटवर्णः शीतवृष्टिः सूर्यकान्तश्चेति मणयः। षडश्रश्चतुरश्रो वृत्तो वा, तीव्ररागः संस्थानवानच्छस्स्निग्धो गुरुरर्चिष्मानन्तर्गतप्रभः प्रभानुलेपी चेति मणिगुणाः। मन्दरागप्रभः सशर्करः पुष्पच्छिद्रः खण्डो दुर्विद्धो लेखाकीर्ण इति दोषाः। विमलकः सस्यकोऽञ्जनमूलकः पित्तकस्सुलभको लोहितकोऽमृतगाश्मको ज्योतीरसको मैलेयक आहिच्छत्रकः कूर्पः प्रतिकूर्पः सुगन्धिकूर्पः क्षीरपकः शुक्तिचूर्णकः शिलाप्रवालकः पुलकः शुक्रपुलकः इत्यन्तरजातयः॥ शेषाः काचमणयः।

सभाराष्ट्रकं मध्यमराष्ट्रकं काश्मक (कान्तीर) राष्ट्रकं श्रीकटनकं मणिमन्तकमिन्द्रवानकं च वज्रम्। खनिस्स्रोतः प्रकीर्णकं च योनयः। मार्जाराक्षकं च शिरीषपुष्पकं गोमूत्रकं गोमेदकं शुद्धस्फटिकं मूलाटीपुष्पकवर्णं मणिवर्णानामन्यतमवर्णमिति वज्रवर्णाः। स्थूलं, स्निग्धं, गुरु, प्रहारसहं, समकोटिकं भाजनलेखी तर्कुभ्रामिभ्राजिष्णु च प्रशस्तम्। नष्टकोणं निरश्रि पार्श्वापवृत्तं च अप्रशस्तम्। प्रवालकं आलकन्दकं, वैवर्णिकं च रक्तं पद्मरागं च करटगर्भिणिकावर्जमिति॥ चन्दनं—सातनं रक्तं भूमिगन्धि गोशीर्षकं कालताम्रं मत्स्यगन्धि; हरिचन्दनं शुकपत्रवर्णमाम्रगन्धि; तार्णसं च; ग्रामेरुकं रक्तं रक्तकालं वा बस्तमूत्रगन्धि; दैवसभेयं रक्तं पद्मगन्धि; जावकं च; जोङ्गकं रक्तं रक्तकालं वा स्निग्धं; तौरूपं च। मालेयकं पाण्डुरक्तं; कुचन्दनं कालवर्णकं गोमूत्रगन्धः; रूक्षमगरुकालं रक्तं रक्तकालं वा; कालपर्वतकम् नवद्यवर्णं वाः कोशाकार पर्वतकं कालं कालचित्रं वा; शीतोदकीयं पद्माभं कालस्निग्धं वा; नागपर्वतकं रूक्षं शैवलवर्णं वा; शाकलं कपिलमिति।

लघुस्निग्धमश्यानं सर्पिस्नेहलेपि गन्धसुखं त्वगनुसार्यनुल्बणमविराग्युष्णसहं दाहग्राहि सुखस्पर्शनमिति चन्दनगुणाः। अगरु—जोङ्गकं कालं कालचित्रं मण्डलचित्रं वा; श्यामं दोङ्गकं; पारसमुद्रकं चित्ररूपमुशीरगन्धि नवमालिकागन्धि वेति। गुरु स्निग्धं पेशलगन्धि निर्हारि अग्निसहमसंप्लुतधूमं समगन्धं विमर्दसहमित्यगरुगुणाः॥ तैलपर्णिकं—अशोकग्रामिकं मांसवर्णं पद्मगन्धि; जोङ्गकं रक्तपीतकमुत्पलगन्धि गोमूत्रगन्धि वा; ग्रामेरुकं स्निग्धं गोमूत्रगन्धि; सौवर्णकुड्यकं रक्तपीतं मातुलुङ्गगन्धि; पूर्णकद्वीपकं पद्मगन्धि नवनीतगन्धि वेति। भद्रश्रीयं पारलौहित्यकं जातीवर्णं; आन्तरवत्यमुशीरवर्णं; उभयं कुष्ठगन्धि चेति; कालेयकः स्वर्णभूमिजास्निग्धपीतकः; औत्तरपर्वतको रक्तपीतक इति साराः।

पिण्डकाथधूमसहमविरागि योगानुविधायि च। चन्दनागरुवच्च तेषां गुणाः। कान्तनावकं प्रैयकं चोत्तरपर्वतकं चर्म। कान्तनावकं मयूरग्रीवाभं; प्रैयकं नीलपीतंश्वेतलेखाबिन्दु चित्रं। तदुभयमष्टाङ्गुलायामम्। बिसी महाबिसी च द्वादशग्रामीये। अव्यक्तरूपा दुहिलिका चित्रा वाबिसी। परुषा श्वेतप्राया महाबिसी द्वादशाङ्गुलायाममुभयम्। श्यामिका कालिका कदली चन्द्रोत्तरा शाकुला चारोहजाः। कपिला बिन्दुचित्रा वा श्यामिका; कालिका कपिला कपोतवर्णा वा। तदुभयमष्टाङ्गुलायामम्। परुषा कदली हस्तायता। सैव चन्द्रचित्रा चन्द्रोत्तरा। कदलीत्रिभागा शाकुला कोठमण्डलचित्रा कृतकर्णिकाऽजिनचित्रा चेति। सामूरं चीनसी सामूली च बाह्लवेयाः। षट्त्रिंशदङ्गुलमञ्जनवर्णं सामूरं; चीनसी रक्तकाली पाण्डुकाली वा; सामूली गोधूमवर्णेति। सातिना नलतूला वृत्तपुच्छा च औद्राः। सातिना कृष्णा। नलतूला नलतूलवर्णा। कपिला वृत्तपुच्छा च। इति चर्मजातयः। चर्मणां मृदु स्निग्धं बहुलरोम च श्रेष्ठम्। शुद्धं शुद्धरक्तं पक्षरक्तं च आविकं; खचितं वानचित्रं खण्डसङ्घात्यं तन्तुविच्छिन्नं च कम्बलः। कौचपकः कलमितिका सौमितिका तुरगास्तरणं वर्णकं तलिच्छकं वारवाणः परिस्तोमः समन्तभद्रकं च आविकम्। पिच्छलमार्द्रमिव च सूक्ष्मं मृदु च श्रेष्ठम्॥ अष्टप्लोतिसङ्घात्या कृष्णा भिङ्गिसी वर्षवारणमपसारक इति नैपालकम्। सम्पुटिका, चतुरश्रिका, लम्बरा, कटवानकं, प्रावरकः सत्तलिकेति मृगरोम। वाङ्गकं श्वेतं स्निग्धं दुकूलं, पौण्ड्रकं श्यामं मणिस्निग्धं; सौवर्णकुड्यकं सूर्यवर्णं मणिस्निग्धोदकवानं चतुरश्रवानं व्यामिश्रवानं च। एतेषामेकांशुकमर्धद्वित्रिचतुरंशुकमिति। तेन काशिकं पौण्ड्रकं च क्षौमं व्याख्यातम्।

मागधिका पौण्ड्रिका सौवर्णकुड्यका च पत्रोर्णाः। नागवृक्षो लिकुचो वकुलो वटश्च योनयः। पीतिका नागवृक्षिका; गोधूमवर्णा लैकुची; श्वेता वाकली; शेषा नवनीतवर्णा। तासां सौवर्ण कुड्यका श्रेष्ठा। तया कौशेयं चीनपट्टाश्च चीनभूमिजा व्याख्याताः। माधुरमापरान्तकं कालिङ्गकं काशिकं वाङ्गकं वात्सकं माहिषकं च कार्पासिकं श्रेष्ठमिति। अतः परेषां रत्नानां प्रमाणं मूल्यलक्षणम्। जातिं रूपं च जानीयान्निधानं नवकर्म च। पुराणप्रतिसंस्कारं कर्मगुह्यमुपस्करान्। देशकालपरीभोगं हिंस्राणां च प्रतिक्रियाम्। इत्यध्यक्षप्रचारे कोशप्रवेश्यरत्नपरीक्षा एकादशोऽध्यायः आदितो द्वात्रिंशः।

---

# त्रयस्त्रिंशोऽध्यायः

## आकरकर्मान्तप्रवर्तनम्

आकराध्यक्षः शुल्बधातुशास्त्ररसपाकमणिरागज्ञस्तज्ज्ञसखो वा तज्जातकर्मकरोपकरणसम्पन्नः किट्टमूषाङ्गारभस्मलिङ्गं वाऽऽकरं भूतपूर्वमभूतपूर्वं वा भूमिप्रस्तररसधातुमत्यर्थवर्णगौरवमुग्रगन्धरसं परीक्षेत। पर्वतानामभिज्ञातोद्देशानां बिलगुहोपत्यकाऽऽलयनिगूढखातेष्वन्तःप्रस्यन्दिनो, जम्बूचूततालफलपक्वहरिद्राभेदहरितालक्षौद्रहिङ्गुलकपुण्डरीकशुकमयूरपत्रवर्णास्सवर्णोदकौषधीपर्यन्ताश्चिक्कणा विशदा भारिकाश्च रसाः काञ्चनिकाः। अप्सु निष्ठ्यूतास्तैलवद्विसर्पिणः पङ्कमलग्राहिणश्च ताम्ररूप्ययोशतादुपरिवेद्धारः। तत्प्रतिरूपकमुग्रगन्धरसं शिलाजतु विद्यात्। पीतकास्ताम्रकास्ताम्रपीतका वा

भूमिप्रस्तरधातवो भिन्ना नीलराजीवन्तो मुद्गमाषकृसरवर्णा वा दधिबिन्दुपिण्डचित्रा हरिद्रा हरीतकीपद्मपत्रशैवलयकृत्प्लीहानवद्यवर्णा भिन्नाश्चुञ्चुवालुकालेखाबिन्दुस्वस्तिकवन्तः सगुलिका आर्चिष्मन्तस्ताप्यमाना न भिद्यन्ते बहुफेनधूमाश्च सुवर्णधातवः प्रतीवापार्थास्ताम्ररूप्यवेधनाः।

शङ्खकर्पूरस्फटिकनवनीतकपोतपारावतविमलकमयूरग्रीवावर्णाः सस्यकगोमेदकगुडमत्स्यण्डिकावर्णाः कोविदारपद्मपाटलीकलायक्षौमातसीपुष्पवर्णास्ससीसाः साञ्जनाः विस्रा भिन्नाः श्वेताभाः कृष्णाः कृष्णाभाः श्वेताः सर्वे वा लेखाबिन्दुचित्रा मृदवो ध्मायमाना न स्फुटन्ति बहुफेनधूमाश्च रूप्यधातवः। सर्वधातूनां गौरववृद्धौ सत्त्ववृद्धिः। तेषामशुद्धा मूढगर्भा वा तीक्ष्णमूत्रक्षारभाविता राजवृक्षवटपीलुगोपित्तरोचना महिषखरकरभमूत्रलण्डपिण्डबद्धास्तत्प्रतीवापास्तदवलेपा वा विशुद्धास्स्रवन्ति। यवमाषतिलपलाशपीलुक्षारैर्गोक्षीराजक्षीरैर्वा कदलीवज्रकन्दप्रतीवापो मार्दवकरः। मधुमधुकमजापयः सतैलं घृतगुडकिण्वयुतं सकन्दलीकम्।

यदपि शतसहस्रधा विभिन्नं भवति मृदु त्रिभिरेव तन्निषेकैः॥ गोदन्तशृङ्गप्रतीवापो मृदुस्तम्भनः। भारिकः स्निग्धो मृदुश्च प्रस्तरधातुर्भूमिभागो वा पिङ्गलो हरितः पाटलो लोहितो वा ताम्रधातुः। काकमेचकः कपोतरोचनावर्णः श्वेतराजिनद्धो वा विस्रस्सीसधातुः। ऊषरकर्बुरः पक्कलोष्ठवर्णो वा त्रपुधातुः। कुरुम्बः पाण्डुरोहितस्सिन्दुवारपुष्पवर्णो वा तीक्ष्णधातुः। काकाण्डभुजपत्रवर्णो वा वैकृन्तकधातुः। अच्छस्स्निग्धः सप्रभो घोषवान् शीततीव्रस्तनुरागश्च मणिधातुः।

धातुसमुत्थितं तज्जातकर्मान्तेषु प्रयोजयेत्। कृतभाण्डव्यवहारमेकमुखमत्ययं चान्यत्र कर्तृक्रेतृविक्रेतॄणां स्थापयेत्। आकरिकमपहरन्तमष्टगुणं दापयेदन्यत्र रत्नेभ्यः। स्तेनमनिसृष्टोपजीविनं च बद्ध्वा कर्म कारयेत्। दण्डोपकारिणं च। व्ययक्रियाभारिकमाकरं भागेन प्रक्रयेण वा दद्यात्। लाघविकमात्मना कारयेत्। लोहाध्यक्षः ताम्रसीसत्रपुवैकृन्तकारकूटवृत्तकंसताललोहकर्मान्तान् कारयेत्। लोहभाण्डव्यवहारं च। लक्षणाध्यक्षः चतुर्भागताम्रं रूप्यरूपं तीक्ष्णत्रपुसीसाञ्जनानामन्यतमं माषबीजयुक्तं कारयेत्। पणमर्धपणं पादमष्टभागमिति; पादाजीवं ताम्ररूपं माषकमर्धमाषकं काकणीमर्धकाकणीमिति। रूपदर्शकः पणयात्रां व्यावहारिकीं कोशप्रवेश्यां च स्थापयेत्। रूपिकमष्टकं शतं; पञ्चकं शतं व्याजीं; पारीक्षिकमष्टभागिकं शतं; पञ्चविंशतिपणमत्ययं चान्यत्र कर्तृक्रेतृविक्रेतृपरीक्षितृभ्यः।

खन्यध्यक्षः शङ्खवज्रमणिमुक्ताप्रवालक्षारकर्मान्तान् कारयेत् पणनव्यवहारं च। लवणाध्यक्षः पाकमुक्तं लवणभागं प्रक्रयं च यथाकालं सङ्गृह्णीयात्। विक्रयाच्च मूल्यं रूपं व्याजीं च आगन्तुलवणं षड्भागं दद्यात्। दत्तभागविभागस्य विक्रयः पञ्चकं शतं व्याजीं रूपं रूपिकं च। क्रेता शुल्कं राजपण्यच्छेदानुरूपं च वैधरणं दद्यात्। अन्यत्र क्रेता षट्छतमत्ययं च। विलवणमुत्तमं दण्डं दद्यात्; अनिसृष्टोपजीवी च अन्यत्र वानप्रस्थेभ्यः। श्रोत्रियास्तपस्विनो विष्टयश्च भक्तलवणं हरेयुः। अतोऽन्यो लवणक्षारवर्गः शुल्कं दद्यात्। एवं मूल्यं विभागं च व्याजीं परिघमत्ययम्। शुल्कं वैधरणं दण्डं रूपं रूपिकमेव च॥ खनिभ्यो द्वादशविधं धातुं पण्यं च संहरेत्। एवं सर्वेषु पण्येषु स्थापयेन्मुखसङ्ग्रहम्॥ आकरप्रभवः कोशः कोशाद्दण्डः प्रजायते। पृथिवी कोशदण्डाभ्यां प्राप्यते कोशभूषणा। इत्यध्यक्षप्रचारे आकरकर्मान्तप्रवर्तनं द्वादशोऽध्यायः आदितः त्रयस्त्रिंशः।

---

# चतुस्त्रिंशोऽध्यायः

## अक्षशालायां सुवर्णाध्यक्षः

सुवर्णाध्यक्षः सुवर्णरजतकर्मान्तानामसम्बन्धावेशनचतुश्शालामेकद्वारामक्षशालां कारयेत्। विशिखामध्ये सौवर्णिकं शिल्पवन्तमभिजातं प्रात्ययिकं च स्थापयेत्। जाम्बूनदं शातकुम्भं हाटकं वैणवं शृङ्गि शुक्तिजं जातरूपं रस-

विद्रुमाकरोद्गतं च सुवर्णम् । किञ्जल्कवर्णं मृदु स्निग्धमनादि भ्राजिष्णु च श्रेष्ठम् । रक्तपीतकं मध्यमम् । रक्तमवरम् । श्रेष्ठानां पाण्डु श्वेतं चाप्राप्तकं । तत् येनाप्राप्तकं तच्चतुर्गुणेन सीसेन शोधयेत् । सीसान्वयेन भिद्यमानं शुष्कपटलैर्ध्मापयेत् । रूक्षत्वाद्भिद्यमानं तैलगोमये निषेचयेत् । आकरोद्गतं सीसान्वयेन भिद्यमानं पाकपत्राणि कृत्वा गण्डिकासु कुट्टयेत् । कन्दलीवज्रकन्दकल्के वा निषेचयेत् । तुत्थोद्गतं गौडिकं काममलं काम्बुकं चाक्रवालिकं च रूप्यम् । श्वेतं स्निग्धं मृदु च श्रेष्ठम् । विपर्यये स्फोटनं च दुष्टम् । तत्सीसचतुर्भागेन शोधयेत् । उद्गतचूलिकमच्छं भ्राजिष्णु दधिवर्णं च शुद्धम् । शुद्धस्यैको हारिद्रस्य सुवर्णो वर्णकः । ततश्शुल्बकाकण्युत्तरापसारिता आचतुस्सीमान्तादिति षोडशवर्णकाः । सुवर्णं पूर्वं निकष्य पश्चाद्वर्णिकां निकषयेत् । समरागलेखमनिम्नोन्नते देशे निकषितं परिमृदितं परिलीढं नखान्तराद्वा गैरिकेणावचूर्णितमुपधिं विद्यात् । जातिहिङ्गुलिकेन पुष्पकासीसेन वा गोमूत्रभावितेन दिग्धेनाग्रहस्तेन संस्पृष्टं सुवर्णं श्वेतीभवति । सकेसरस्स्निग्धो मृदुर्भ्राजिष्णुश्च निकषरागः श्रेष्ठः । कालिङ्गकस्तापीपाषाणो वा मुद्गवर्णो निकषः श्रेष्ठः । समरागी विक्रयक्रयहितः ।

हस्तिच्छविकः सहरितः प्रतिरागी विक्रयहितः । स्थिरः परुषो विषमवर्णश्चाप्रतिरागी क्रयहितः । छेदश्चिक्कणः समवर्णः श्लक्ष्णो मृदुर्भ्राजिष्णुश्च श्रेष्ठः । तापे बहिरन्तश्च समः किञ्जल्कवर्णः करण्डकपुष्पवर्णो वा श्रेष्ठः । श्यावो नीलश्चाप्राप्तकः ।

तुलाप्रतिमानं पौतवाध्यक्षे वक्ष्यामः । तेनोपदेशेन रूप्यसुवर्णं दद्यादाददीत च । अक्षशालामनायुक्तो नोपगच्छेत् । अभिगच्छन् उच्छेद्यः । आयुक्तो वा सरूप्यस्वर्णस्तेनव ज़ीयेत । विचितवस्त्रहस्तगुह्याः काञ्चनपृषतत्वष्टृतपनीयकारवो ध्मायकचरकपांसुधावकाः प्रविशेयुः निष्कसेयुश्च । सर्वं चैषामुपकरणमनिष्ठिताश्च प्रयोगास्तत्रैवावतिष्ठेरन् । गृहीतं सुवर्णं धृतं च प्रयोगं करणमध्ये दद्यात् । सायं प्रातश्च लक्षितं कर्तृकारयितृमुद्राभ्यां निदध्यात् । क्षेपणो गुणः क्षुद्रकमिति कर्माणि । क्षेपणः काचार्पणादीनि । गुणस्सूत्रवानादीनि । घनं सुषिरं पृषितादियुक्तं क्षुद्रकमिति । अर्पयेत् काचकर्मणः पञ्चभागं काञ्चनं दशभागं कटु मानम् । ताम्रपादयुक्तं रूप्यं रूप्यपादयुक्तं वा सुवर्णं संस्कृतकं तस्माद्रक्षेत् । पृषत काचकर्मणः त्रयो हि भागाः परिभाण्डं द्वौ वास्तुकं; चत्वारो वा वास्तुकं त्रयः परिभाण्डम् । त्वष्टृकर्मणः शुल्बभाण्डं समसुवर्णेन संयूहयेत् । रूप्यभाण्डं घनं घनसुषिरं वा सुवर्णार्धेन अवलेपयेत् । चतुर्भागसुवर्णं वालुकाहिङ्गुलकस्य रसेन चूर्णेन वा वासयेत् । तपनीयं ज्येष्ठं सुवर्णं सुरागं समसीसातिक्रान्तं पाकपत्रपक्वं सैन्धविकयोज्ज्वालितं नीलपीतश्वेतहरितशुकपोतवर्णानां प्रकृतिर्भवति । तीक्ष्णं चास्य मयूरग्रीवाभं श्वेतभङ्गं चिमिचिमायितं पीतचूर्णितं काकणिकस्सुवर्णरागः । तारमुपशुद्धं वा अस्तितुत्थे चतुस्समसीसे चतुश्शुष्कतुत्थे चतुः कपाले त्रिर्गोमये द्विः एवं सप्तदशतुत्थातिक्रान्तं सैन्धविकयोज्ज्वालितम् । एतस्मात्काकण्युत्तरापसारिता । आद्विमाषादितिसुवर्णे देयं पश्चाद्रागयोगः श्वेततारं भवति । त्रयोंऽशाः तपनीयस्य द्वात्रिंशद्भागश्वेततारमूर्छितं तत् श्वेतलोहितकं भवति । ताम्रं पीतकं करोति । तपनीयमुज्ज्वाल्य रागत्रिभागं दद्यात् । पीतरागं भवति । श्वेततारभागौ-द्वावेकस्तपनीयस्य मुद्गवर्णं करोति ।

कालायसस्यार्धभागाभ्यक्तं कृष्णं भवति ॥ प्रतिलेपिना रसेन द्विगुणाभ्यक्तं तपनीयं शुकपत्रवर्णं भवति । तस्यारम्भे रागविशेषेषु प्रतिवर्णिकां गृह्णीयात् ॥ तीक्ष्णताम्रसंस्कारं च बुद्ध्येत ॥ तस्माद्वज्रमणिमुक्ताप्रवालरूपाणामपनेयिमानं च रूप्यसुवर्णभाण्डबन्धप्रमाणानि चेति ॥ समरागं समद्वन्द्वमसक्तपृषतं स्थिरम् । सुप्रमृष्टमसंवीतं विभक्तं धारणे सुखम् ॥ अभिनीतं प्रभायुक्तं संस्थानमधुरं समम् । मनोनेत्राभिरामं च तपनीयगुणाःस्मृताः ॥ इत्यध्यक्षप्रचारे अक्षशालायां सुवर्णाध्यक्षस्त्रयोदशोऽध्यायः आदितश्चतुस्त्रिंशः ।

# पञ्चत्रिंशोऽध्यायः



## विशिखायां सौवर्णिकप्रचारः

सौवर्णिकः पौरजानपदानां रूप्यसुवर्णमावेशनीभिः कारयेत्। निर्दिष्टकालकार्यं च कर्म कुर्युः । अनिर्दिष्टकालं कार्यापदेशम्। कार्यस्यान्यथाकरणे वेतननाशः तद्द्विगुणश्चदण्डः। कालातिपातने पादहीनं वेतनं तद्द्विगुणश्च दण्डः। यथावर्णप्रमाणं निक्षेपं गृह्णीयुस्तथाविधमेवार्पयेयुः। कालान्तरादपि च तथाविधमेव प्रतिगृह्णीयुरन्यत्र क्षीणपरिशीर्णाभ्याम्। आवेशनिभिस्सुवर्णपुद्गललक्षणप्रयोगेषु तत्तज्जानीयात्। तप्तकलधौतकयोः काकणिकस्सुवर्णे क्षयो देयः। तीक्ष्णकाकणीरूप्यद्विगुणो रागप्रक्षेपस्तस्य षड्भागः क्षयः। वर्णहीने माषावरं पूर्वस्साहसदण्डः। प्रमाणहीने मध्यमः। तुलाप्रतिमानोपधावुत्तमः कृतभाण्डोपधौ च। सौवर्णिकेनादृष्टमन्यत्र वा प्रयोगं कारयतो द्वादशपणो दण्डः। कर्तुर्द्विगुणः; सापसारश्चेत्। अनपसारः कण्टकशोधनाय नीयेत। कर्तुश्च द्विशतो दण्डः पणच्छेदनं वा। तुलाप्रतिमानभाण्डं पौतवहस्तात्क्रीणीयुः। अन्यथा द्वादशपणो दण्डः। घनं घनसुषिरं संयूह्यमवलेप्यं सङ्घात्यं वासितकं च कारुकर्म। तुलाविषममपसारणं विस्रावणं पेटको पिङ्कश्चेति हरणोपायाः। सन्नामिन्युत्कीर्णिका भिन्नमस्तकोपकण्ठी कुशिक्या सकटुकक्ष्या पारिवेल्ययस्कान्ता च दुष्टतुलाः।

रूप्यस्य द्वौ भागावेकः शुल्बस्य त्रिपुटकं। तेनाकरोद्गतमपसार्यते तत्त्रिपुटकापसारितं; शुल्बेन शुल्बापसारितं; वेल्लकेन वेल्लकापसारितं; शुल्बार्धसारेण हेम्ना हेमापसारितम्। मूकमूषा पूतिकिट्टः करटकमुखं नालीसन्दंशो जोङ्गनीसुवर्चिकालवणम्। तदेव सुवर्णमित्यपसारणमार्गाः। पूर्वप्रणिहिता वा पिण्डवालुका मूषाभेदादग्निष्ठादुद्ध्रियन्ते, पश्चाद्बन्धने आचितकपत्रपरीक्षायां वा रूप्यरूपेण परिवर्तनं विस्रावणम्। पिण्डवालुकानां लोहपिण्डवालुकाभिर्वा। गाढश्चाभ्युद्धार्यश्च पेटकः संयूह्यावलेप्यसङ्घात्येषु क्रियते। सीसरूपं सुवर्णपत्रेणावलिप्तमभ्यन्तरमष्टकेन बद्धं गाढपेटकः सएव पटलसम्पुटेष्वभ्युद्धार्यः। पत्रमाश्लिष्टं यमकपत्रं वावलेप्येषु क्रियते। शुल्बं तारं वा गर्भः पत्राणां सङ्घात्येषु क्रियते। शुल्बरूपं सुवर्णपत्रसंहतं प्रमृष्टं सुपार्श्वं; तदेव यमकपत्रसंहतं प्रमृष्टं ताम्रताररूपं चोत्तरवर्णकः। तदुभयं तापनिकषाभ्यां निश्शब्दोल्लेखनाभ्यां वा विद्यात्। अभ्युद्धार्यं बदराम्ले लवणोदके वा सादयन्तीति पेटकः। घनसुषिरे वा रूपे सुवर्णमृन्मालुकाहिङ्गुलककल्को वा तप्तोऽवतिष्ठते; दृढवास्तुके वा रूपे वालुकामिश्रं जतुगान्धारपङ्को वा तप्तोऽवतिष्ठते। तयोस्तापनमवध्वंसनं वा शुद्धिः। सपरिभाण्डे वा रूपे लवणमुल्कया कटुशर्करया तप्तमवतिष्ठते। तस्य क्राथनं शुद्धिः। अभ्रपटलमष्टकेन द्विगुणवास्तुके वा रूपे बध्यते। तस्यापिहितकाचकस्योदके निमज्जत एकदेशः सीदति, पटलान्तरेषु वा सूच्या भिद्यते। मणयो रूप्यं सुवर्णं वा घनसुषिराणां पिङ्कः॥ तस्य तापनमवध्वंसनं वा शुद्धिरिति पिङ्कः॥ तस्माद्वज्रमणिमुक्ताप्रवालरूपाणां जातिरूपवर्णप्रमाणपुद्गललक्षणान्युपलभेत। कृतभाण्डपरीक्षायां पुराणभाण्डप्रतिसंस्कारे वा चत्वारो हरणोपायाः—परिकुट्टनमवच्छेदनमुल्लेखनं परिमर्दनं वा॥ पेटकापदेशेन पृषितं गुणं पिटकां वा यत् परिशातयन्ति तत्परिकुट्टनम्॥ यद्द्विगुणं वास्तुकानां वा रूपे सीसरूपं प्रक्षिप्य अभ्यन्तरमवच्छिन्दन्ति तदवच्छेदनम्॥ यत् घनानां तीक्ष्णेनोल्लिखन्ति तदुल्लेखनम्॥ हरितालमनश्शिलाहिङ्गुलकचूर्णानामन्येतमन कुरुविन्दचूर्णेन वा वस्त्रं संयह्य यत् परिमृद्नन्ति तत् परिमर्दनम्॥ तेन सौवर्णराजतानि भाण्डानि क्षीयन्ते। न चैषां किंचिदवरुग्णं भवति।

भग्नखण्डघृष्टानां संयूह्यानां सदृशेनानुमानं कुर्यात्। अवलेप्यानां यावदुत्पाटितं तावदुत्पाट्यानुमानं कुर्यात्। विरूपाणां वा तापनमुदकपेषणं च बहुशः कुर्यात्। अवक्षेपः प्रतिमानमग्निर्गण्डिका भण्डिकाधिकरणी पिच्छस्सूत्रं चेल्लंबोल्लनं शिर उत्सङ्गो मक्षिका स्वकायेक्षादृतिरुदकशरावमग्निष्ठमिति काचं विद्यात्। राजतानां विस्रं मलग्राहि परुषं प्रस्तीतं विवर्णं वा दुष्टमिति विद्यात्। एवं नवं च जीर्णं च विरूपं चापिभाण्डकं। परिक्षेतात्ययं चैषां यथोद्दिष्टं प्रकल्पयेत्॥ इत्यध्यक्षप्रचारे विशिखायां सौवर्णिकप्रचारः चतुर्दशोऽध्यायः आदितः पञ्चत्रिंशः।

---

# षट्त्रिंशोऽध्यायः

## कोष्ठागाराध्यक्षः

कोष्ठागाराध्यक्षः सीताराष्ट्रक्रयिमपरिवर्तकप्रामित्यकापमित्यकसिंहनिकान्यजातव्ययप्रत्यायोपस्थानान्युपलभेत । सीताध्यक्षोपनीतः सस्यवर्णकस्सीता ॥ पिण्डकरः, षड्भागः, सेनाभक्तं, बलिः, करः, उत्सङ्गः, पार्श्वं, पारिहीणिकं, औपायनिकं, कौष्ठेयकं च राष्ट्रम् ॥ धान्यमूल्यं, कोशनिर्हारः, प्रयोगप्रत्यादानं च क्रयिमम् । सस्यवर्णानामर्घान्तरेण विनिमयः परिवर्तकः । सस्ययाचनमन्यतः प्रामित्यकम् । तदेव प्रतिदानार्थमापमित्यकम् । कुट्टकरोचकसक्तुशुक्तपिष्टकर्म तज्जीवनेषु तैलपीडनमौरभ्रचाक्रिकेष्विक्षूणां च क्षारकर्म सिंहनिका । नष्टप्रस्मृतादिरन्यजातः । विक्षेपव्याधितान्तरारम्भशेषं च व्ययप्रत्यायः । तुलामानान्तरं हस्तपूरणमुत्करो व्याजी । पर्युषितं प्रार्जितं चोपस्थानमिति । धान्यस्नेहक्षारलवणानां । धान्यकल्पं सीताध्यक्षे वक्ष्यामः । सर्पिस्तैलवसामज्जानस्स्नेहाः । फाणितगुडमत्स्यण्डिकाखण्डशर्कराः क्षारवर्गः । सैन्धवसामुद्रबिडयवक्षारसौवर्चलोद्भेदजा लवणवर्गः । क्षौद्रं मार्द्वीकं च मधु । इक्षुरसगुलमधुफाणितजाम्बवपनसानामन्यतमो मेषशृङ्गीपिप्पलीक्वाथाभिषुतो मासिकष्षाण्मासिकस्सांवत्सरिको वा चिद्भिटोर्वारुकेक्षुकाण्डाम्रफलामलकावसुतः शुद्धो वा शुक्तवर्गः ॥ वृक्षाम्लकरमर्दाम्रविदलामलकमातुलुङ्गकोलबदरसौवीरकपरूषकादिः फलाम्लवर्गः ।

दधिधान्याम्लादिर्द्रवाम्लवर्गः । पिप्पलीमरीचशृङ्गिबेराजाजि किराततिक्तगौरसर्षपकुस्तुम्बुरुचोरकदमनकमरुवकशिग्रुकाण्डादिः कटुकवर्गः । शुष्कमत्स्यमांसकन्दमूलफलशाकादि च शाकवर्गः । ततोऽर्धमापदर्थं जानपदानां स्थापयेत् । अर्धमुपयुञ्जीत । नवेन चानवं शोधयेत् । क्षुण्णघृष्टपिष्टभृष्टानामार्द्रशुष्कसिद्धानां च धान्यानां वृद्धिक्षयप्रमाणानि प्रत्यक्षीकुर्वीत । कोद्रवव्रीहीणामर्धं सारः । शालीनामष्टभागोनः । त्रिभागोनो वरकाणाम् । प्रियङ्गूणामर्धं सारो । नवभाग वृद्धिश्च । उदारकस्तुल्यः । यवागोधमाश्चक्षुण्णाः । किलाययवामुद्गमाषाश्चघृष्टाः । पञ्चभागवृद्धिर्गोधूमः सक्तवश्च । पादोनाकलायचमसी । मुद्गमाषाणामर्धपादोनः । शैंबानामर्धं सारः । त्रिभागोनो मसूराणाम् । पिष्टमामं कुल्माषाश्चाध्यर्धगुणाः । द्विगुणो यावकः । पुलाकः पिष्टं च सिद्धम् । कोद्रववरकोदारकप्रियङ्गूणां त्रिगुणमन्नं । चतुर्गुणं व्रीहीणाम् । पञ्चगुणं शालीनाम् । तिमितमपरान्नं द्विगुणमर्धाधिकं विरूढानाम् । पञ्चभागवृद्धिर्भृष्टानाम् । कलायो द्विगुणः । लाजा भरुजाश्च षट्कं तैलमतसीनाम् । निम्बकुशाम्रकपित्थादीनां पञ्चभागः । चतुर्भागिकास्तिलकुसुम्भमधूकेङ्गुदीस्नेहाः । कार्पासक्षौमाणां पञ्चपले पलसूत्रम् । पञ्चद्रोणे शालीनां द्वादशाढकं तण्डुलानां कलभभोजनम् । एकादशकं व्यालानां । दशकं औपवाह्यानां । नवकं सान्नाह्यानाम् । अष्टकं पत्तीनाम् । सप्तकं मुख्यानाम् । षट्कं देवीकुमाराणाम् । पञ्चकं राज्ञाम् । अखण्डपरिशुद्धानां वा तण्डुलानां प्रस्थः । चतुर्भागस्सूपः षोडशो लवणस्यांशः चतुर्भागस्सर्पिषः तैलस्य वा एकमार्यभक्तम् । प्रस्थः षड्भागस्सूपः अर्धस्नेहमवराणाम् । पादोनं स्त्रीणाम् । अर्धं बालानाम् । मांसपलविंशत्या स्नेहार्धकुडुबः, पलिको लवणस्यांशः, क्षारपलयोगः, द्विधरणिकः कटुकयोगः, दध्नश्चार्धप्रस्थः । तेनोत्तरं व्याख्यातम् । शाकानामध्यर्धगुणः । शुष्काणां द्विगुणस्स चैव योगः । हस्त्यश्वयोस्तदध्यक्षे विधाप्रमाणं वक्ष्यामः । बलीवर्दानां माषद्रोणं यवानां वा पुलाकः शेषमश्वविधानम् । विशेषो घाणपिण्याकतुला कणकुण्डकं दशाढकं वा । द्विगुणं महिषोष्ट्राणाम् ।

अर्धद्रोणं खरपृषतरोहितानाम् । आढकमेणकुरङ्गाणाम् । अर्धाढकमजैलकवराहाणां द्विगुणं वा कणकुण्डकम् । प्रस्थादनश्शुनाम् । हंसक्रौञ्चमयूराणामर्धप्रस्थः । शेषाणामतो मृगपशुपक्षिव्यालानामेकभक्तादनुमानं ग्राहयेत् । अङ्गारांस्तुषान् लोहकर्मान्तभित्तिलेप्यानां हारयेत् । कणिकाः दासकर्मकरसूपकाराणामतोऽन्यदौदनिकापूपिकेभ्यः प्रयच्छेत् । तुलामानभाण्डं रोचनीदृषन्मुसलोलूखलकुट्टकरोचकयन्त्रपत्रकशूर्पचालनिकाकण्डोलपिटकसंमार्जन्यश्चोपकरणानि । मार्जकारक्षकधारकमायकमापकदायकदापकशलाकाप्रातिग्राहकदासकर्मकरवर्गश्च विष्टिः ॥ उच्चैर्धान्यस्य निक्षेपो मूताः क्षारस्य संहताः । मृत्काष्ठकोष्ठाः स्नेहस्य पृथिवी लवणस्य च ॥ इत्यध्यक्षप्रचारे कोष्ठागाराध्यक्षः पञ्चदशोऽध्यायः. आदितष्षट्त्रिंशः ।

---

# सप्तत्रिंशोऽध्यायः



## पण्याध्यक्षः

पण्याध्यक्षः स्थलजलजानां नानाविधानां पण्यानां स्थलपथवारिपथोपयातानां सारफल्गवर्घान्तरं प्रियाप्रियतां च विद्यात् । तथा विक्षेपसंक्षेपक्रयविक्रयप्रयोगकालान् । यच्च पण्यं प्रचुरं स्यात्तदेकीकृत्यार्घमारोपयेत् । प्राप्तेऽर्घे वाऽर्घान्तरं कारयेत् । स्वभूमिजानां राजपण्यानामेकमुखं व्यवहारं स्थापयेत् । परभूमिजानामनेकमुखम् । उभयं च प्रजानामनुग्रहेण विक्रापयेत् । स्थूलमपि च लाभं प्रजानामौपघातिकं वारयेत् । अजस्रपण्यानां कालोपरोधं सङ्कुलदोषं वा नोत्पादयेत् । बहुमुखं वा राजपण्यं वैदेहकाः कृतार्घं विक्रीणीरन् । छेदानुरूपं च वैधरणं दद्युः । षोडशभागो मानव्याजी । विंशतिभागस्तुलामानम् । गण्यपण्यानामेकादशभागः । परभूमिजं पण्यमनुग्रहेणावाहयेत् । नाविकसार्थवाहेभ्यश्च परिहारमायतिक्षमं दद्यात् । अनभियोगश्चार्थेष्वागन्तूनामन्यत्र सभ्योपकारिभ्यः । उत्तमर्णकर्तृकाभियोगप्रतिषेधः । पण्याधिष्ठातारः पण्यमूल्यमेकमुखं काष्ठद्रोण्यामेकच्छिद्रापिधानायां निदध्युः । अह्नश्चाष्टमे भागे पण्याध्यक्षस्यार्पयेयुः " इदं विक्रीतमिदं शेषमिति " । तुलामानभाण्डकं चार्पयेयुः ॥ इति स्वविषये व्याख्यातम् ।

परविषये तु—पण्यप्रतिपण्ययोरर्घमूल्यं च आगमय्य शुल्कवर्तन्यातिवाहिकगुल्मतरदेयभक्तभाटकव्ययशुद्धमुदयं पश्येत् । असत्युदये भाण्डनिर्वहणेन पण्यप्रतिपण्यार्घेण वा लाभं पश्येत् । ततस्सारपादेन स्थलव्यवहारमध्वना क्षेमेण प्रयोजयेत् । अटव्यन्तपालपुरराष्ट्रमुख्यैश्च प्रतिसंसर्गं गच्छेदनुग्रहार्थम् । आपदि सारमात्मानं वा मोक्षयेत् । आत्मनो वा भूमिमप्राप्तः सर्वदेयविशुद्धं व्यवहरेत् । वारिपथे च यानभाटकपथ्यदनपण्यप्रतिपण्यार्घप्रमाणयात्राकालभयप्रतीकारपण्यपत्तनचारित्राण्युपलभेत ॥ नदीपथे च विज्ञाय व्यवहारं चरित्रतः । यतो लाभस्ततो गच्छेदलाभं परिवर्जयेत् ॥ इत्यध्यक्षप्रचारे पण्याध्यक्षष्षोडशोऽध्यायः आदितस्सप्तत्रिंशः ।

---

# अष्टत्रिंशोऽध्यायः



## कुप्याध्यक्षः

कुप्याध्यक्षो द्रव्यवनपालैः कुप्यमानाययेत् । द्रव्यवनकर्मान्तांश्च प्रयोजयेत् । द्रव्यवनच्छिदां च देयमत्ययं च स्थापयेदन्यत्रापद्भ्यः ॥ कुप्यवर्गः—शाकतिनिशधन्वनार्जुनमधूकतिलकसालशिंशुपारिमेदराजादनशिरीषखदिरसरलतालसर्जाश्वकर्णसोमवल्ककशाम्रप्रियकधवादिस्सारदारुवर्गः ॥ उटजचिमियचापवेणुवंशसातिनकण्टकभाल्लूकादिः वेणुवर्गः ॥ वेत्रशीककवल्लीवाशीश्यामलतानागलतादिर्वल्लीवर्गः ॥ मालतीमूर्वार्कशणगवेधुकातस्यादिः वल्कवर्गः ॥ मुञ्जबल्वजादि रज्जुभाण्डम् ॥ तालीतालभूर्जानां पत्रम् । किंशुककुसुम्भकुङ्कुमानां पुष्पम् ॥ कन्दमूलफलादिरौषधवर्गः ॥ कालकूटवत्सनाभहालाहलमेषशृङ्गमुस्ताकुष्ठमहाविषवेल्लितकगौरार्द्रबालकमार्कटहैमवतकालिङ्गकदारकांकोलसारकोष्ट्रकादीनि विषाणि । सर्पाः कीटाश्च त एव कुम्भगता विषवर्गः । गोधासेरकद्वीपिशिंशुमारसिंहव्याघ्रहस्तिमहिषचमरसृमरखड्गगोमृगगवयानां चर्मास्थिपित्तस्नाय्वस्थिदन्तशृङ्गखुरपुच्छान्यन्येषां वाऽपि मृगपशुपक्षिव्यालानाम् । कालायसताम्रवृत्तकांस्यसीसत्रपुवैकृन्तकारकूटानि लोहानि । विदलमृत्तिकामयं भाण्डम् । अङ्गारतुषभस्मानि मृगपशुपक्षिव्यालवाटाः काष्ठतृणवाटाश्चेति ।

बहिरन्तश्चकर्मान्ता विभक्तास्सर्वभाण्डिकाः । आजीवपुररक्षार्थाः कार्याः कुप्योपजीविना ॥ इत्यध्यक्षप्रचारे कुप्याध्यक्षः सप्तदशोऽध्याय आदितोऽष्टत्रिंशः ।

---

# एकोनचत्वारिंशोऽध्यायः



## आयुधागाराध्यक्षः

आयुधागाराध्यक्षः साङ्ग्रामिकं दौर्गकर्मिकं परपुराभिघातिकं चक्रयन्त्रमायुधमावरणमुपकरणं च तज्जातकारुशिल्पिभिः कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिः कारयेत् । स्वभूमौ च स्थापयेत् । स्थानपरिवर्तनमातपप्रवातप्रदानं च बहुशः कुर्यात् । ऊष्मोपस्नेहक्रिमिभिरुपहन्यमानमन्यथा स्थापयेत् । जातिरूपलक्षणप्रमाणागममूल्यनिक्षेपैश्चोपलभेत । सर्वतोभद्रजामदग्न्यबहुमुखविश्वासघातिसङ्घाटीयानकपर्जन्यकबाहूर्ध्वबाहूनि स्थितयन्त्राणि । पञ्चालिक देवदण्डसूकरिकामुसलयष्टिहस्तिवारकतालवृन्तमुद्गरद्रुघणगदास्पृक्तलाकुद्दालास्फोटिमोद्धाटिमोत्पाटिमशतघ्नित्रिशूलचक्राणि चलयन्त्राणि ॥ शक्तिप्रासकुन्तहाटकभिण्डिपालशूलतोमरवराहकर्णकणयकर्पणत्रासिकादीनि च हलमुखानि । तालचापदारवशार्ङ्गाणि कार्मुककोदण्डद्रूणां धनूंषि । मूर्वार्कशणगवेधुवेणुस्नायूनि ज्याः । वेणुशरशलाकादण्डासननाराचाश्च इषवः । तेषां मुखानि छेदनभेदनताडनान्यायसास्थिदारवाणि । निस्त्रिंशमण्डलाग्रासियष्टयः खड्गाः । खड्गमहिषवारणविषाणदारुवेणुमूलानित्सरवः खड्गमुष्टयः । परशुकुठारपट्टसखनित्रकुद्दालक्रकचकाण्डच्छेदनाः क्षुरकल्पाः । यन्त्रगोष्पणमुष्टिपाषाणरोचनीदृषदश्च आयुधानि । लोहजालजालिकापट्टकवचसूत्रकंकटशिंशुमारकखड्गिधेनुकहस्तिगोचर्मखुरशृङ्गसङ्घातं वर्माणि । शिरस्त्राणकण्ठत्राणकूर्पासकञ्चुकवारवाणपट्टनागोदरिकाः पेटीचर्महस्तिकर्णतालमूलधमनिकाकवाटकिटिकाप्रतिहतवलाहकान्ताश्च आवराणानि । हस्तिरथवाजिनां योग्यभाण्डमालङ्कारिकं सन्नाहकल्पनाश्चोपकरणानि । ऐन्द्रजालिकमौपनिषदिकं च कर्म कर्मान्तानां च । इच्छामारम्भनिष्पत्तिं प्रयोगं व्याजमुन्नमम् । क्षयव्ययौ च जानीयात् कुप्यानामायुधेश्वरः ॥ इत्यध्यक्षप्रचारे आयुधागाराध्यक्षः अष्टादशोऽध्यायः आदित एकोनचत्वारिंशः ।

---

# चत्वारिंशोऽध्यायः



## तुलामानपौतवम्.

पौतवाध्यक्षः पौतवकर्मान्तान् कारयेत् । धान्यमाषा दश सुवर्णमाषकः पञ्च वा गुञ्जाः । ते षोडश सुवर्णः कर्षो वा । चतुःकर्षं पलम् । अष्टाशीतिर्गौरसर्षपा रूप्यमाषकः । ते षोडश धरणम् । शैंब्यानि वा विंशतिः । विंशतितण्डुलम् वज्रधरणम् । अर्धमाषकः, माषकः, द्वौ, चत्वारः, अष्टौ माषकाः, सुवर्णौ द्वौ, चत्वारः, अष्टौ सुवर्णाः, दश, विंशतिः, त्रिंशत्, चत्वारिंशत्, शतमिति । तेन धरणानि व्याख्यातानि । प्रतिमानान्ययोमयानि मागधमेकलशैलमयानि, यानि वा नोदकप्रदेहाभ्यां वृद्धिं गच्छेयुरुष्णेन वा ह्रासम् । षडङ्गुलादूर्ध्वमष्टाङ्गुलोत्तराः दश तुलाः कारयेल्लोहपलादूर्ध्वमेकपलोत्तराः यन्त्रमुभयतः शिक्यं वा । पञ्चत्रिंशत्पललोहां द्विसप्तत्यङ्गुलायामां समवृत्तां कारयेत् । तस्याः पञ्चपलिकं मण्डलं बद्ध्वा समकरणं कारयेत् । ततः कर्षोत्तरं पलं पलोत्तरं दशपलं द्वादश, पञ्चदश विंशतिरिति पदानि कारयेत् । तत आशतादृशोत्तरं कारयेत् । अक्षेषु नद्ध्रीपिनद्धं कारयेत् । द्विगुणलोहां तुलामतष्षण्णवत्यङ्गुलायामां परिमाणीं कारयेत् । तस्याः शतपदादूर्ध्वं विंशतिः, पञ्चाशत्, शतमिति पदानि कारयेत् । विंशतितौलिको भारः । दशधरणिकं पलम् । तत्पलशतमायमानी । पञ्चपलावरा व्यावहारिकी भाजन्यन्तःपुरभाजिनी च । तासामर्धधरणावरं पलम् । द्विपलावरमुत्तरलोहम् । षडङ्गुलावराश्चायामाः । पूर्वयोः पञ्चपलिकः प्रयामो मांसलोहलवणमणिवर्जम् । काष्ठतुला अष्टहस्ता

पदवती प्रतिमानवती मयूरपदाधिष्ठिता । काष्ठपञ्चविंशतिपलं तण्डुलप्रस्थसाधनम् । एष प्रदेशो बह्वल्पयोः । इति तुलाप्रतिमानं व्याख्यातम् । अथ धान्यमाषद्विपलशतं द्रोणमायमानम् । सप्ताशीतिपलशतमर्धपलं च व्यावहारिकम् । पञ्चसप्ततिपलशतं भाजनीयम् । द्विषष्टिपलशतमर्धपलं चान्तःपुरभाजनीयम् । तेषामाढकप्रस्थकुडुबाश्चतुर्भागावराः ।

षोडशद्रोणा खारी । विंशतिद्रोणिकः कुम्भः । कुम्भैर्दशभिर्वहः । शुष्कसारदारुमयं समं चतुर्भागशिखं मानं कारयेत् । अन्तःशिखं वा । रसस्य तु । सुरायाः पुष्पफलयोः तुषाङ्गाराणां सुधायाश्च शिखामानं द्विगुणोत्तरा वृद्धिः । सपादपणो द्रोणमूल्यम् । आढकस्य पादोनः । षण्माषकाः प्रस्थस्य । माषकः कुडुबस्य । द्विगुणं रसादीनां मानमूल्यम् । विंशतिपणाः प्रतिमानस्य । तुलामूल्यं त्रिभागः । चतुर्मासिकं प्रातिवेधनिकं कारयेत् । अप्रतिविद्धस्यात्ययः सपादः सप्तविंशतिपणः । प्रातिवेधनिकं काकणीकमहरहः पौतवाध्यक्षाय दद्युः । द्वात्रिंशद्भागस्तप्तव्याजी सर्पिषश्चतुष्षष्टिभागस्तैलस्य । पञ्चाशद्भागो मानस्रावो द्रवाणाम् । कुडुबार्धचतुरष्टभागानि मानानि कारयेत् । कुडुबाश्चतुरशीतिः वारकस्सर्पिषो मतः । चतुष्षष्टिस्तु तैलस्य पादश्च घटिकाऽनयोः । इत्यध्यक्षप्रचारे तुलामानपौतवं एकोनविंशोऽध्यायः आदितश्चत्वारिंशः ।

---

# एकचत्वारिंशोऽध्यायः



## देशकालमानम्

मानाध्यक्षो देशकालमानं विद्यात् । अष्टौ परमाणवो रथचक्रविप्रुट् । ता अष्टौ लिक्षा । ता अष्टौ यूकामध्यः । ते अष्टौ यवमध्यः । अष्टौ यवमध्याः अङ्गुलम् । मध्यमस्य पुरुषस्य मध्यमाया अङ्गुल्या मध्यप्रकर्षो वाङ्गुलम् । चतुरङ्गुलो धनुर्ग्रहः । अष्टाङ्गुला धनुर्मुष्टिः । द्वादशाङ्गुलो वितस्तिः छायापौरुषं च । चतुर्दशाङ्गुलं शमश्शलः परिरयः पदं च । द्विवितस्तिररत्निः प्राजापत्यो हस्तः । सधनुर्ग्रहः पौतवविवीतमानम् । सधनुर्मुष्टिः किष्कुः कंसो वा । द्विचत्वारिंशदङ्गुलस्तक्षणः क्राकचिककिष्कुः स्कन्धावारदुर्गराजपरिग्रहमानम् । चतुःपञ्चाशदङ्गुलः कुप्यवनहस्तः । चतुरशीत्यङ्गुलो व्यामो रज्जुमानं खातपौरुषं च । चतुररत्निर्दण्डो धनुर्नालिकापौरुषं च ।

गार्हपत्यमष्टशताङ्गुलं धनुः पथिप्राकारमानं पौरुषं च अग्निचित्यानाम् । षट्कंसो दण्डो ब्रह्मदेयातिथ्यमानम् । दशदण्डा रज्जुः । द्विरज्जुकः परिदेशः । त्रिरज्जुकं निवर्तनम् । एकतो द्विदण्डाधिको बाहुः । द्विधनुस्सहस्रं गोरुतम् । चतुर्गोरुतं योजनम् । इति देशमानं व्याख्यातम् । कालमानमत ऊर्ध्वम् ।

त्रुटो लवो निमेषः काष्ठा कला नालिका मुहूर्तः पूर्वापरभागौ दिवसो रात्रिः पक्षो मास ऋतुरयनं संवत्सरो युगमिति कालाः निमेषचतुर्भागस्त्रुटः । द्वौ त्रुटौ लवः । द्वौ लवौ निमेषः । पञ्च निमेषाः काष्ठा । त्रिंशत्काष्ठाः कला । चत्वारिंशत्कलाः नाडिका । सुवर्णमाषकाश्चत्वारश्चतुरङ्गुलायामाः कुम्भाच्छिद्रमाढकमंभसो वा नालिका । द्विनालिको मुहूर्तः ।

पञ्चदशमुहूर्तो दिवसो रात्रिश्च चैत्रे मास्याश्वयुजे च मासि भवतः । ततः परं त्रिभिर्मुहूर्तैरन्यतरष्षण्मासं वर्धते ह्रसते चेति । छायायामष्टपौरुष्यामष्टादशभागश्छेदः, षट्पौरुष्यां चतुर्दशभागः, चतुष्पौरुष्यामष्टभागः, द्विपौरुष्यां षड्भागः, पौरुष्यां चतुर्भागः, अष्टाङ्गुलायां त्रयोदश भागाः, चतुरङ्गुलायां अष्टभागाः, अच्छायो मध्याह्न इति । परावृत्ते दिवसे शेषमेवं विद्यात् । आषाढे मासि नष्टच्छायो मध्याह्नो भवति । अतः परं श्रावणादीनां षण्मासानां द्व्यङ्गुलोत्तरा माघादीनां द्व्यङ्गुलावरा छाया इति । पञ्चदशाहोरात्राः पक्षः । सोमाप्यायनश्शुक्लः । सोमावच्छेदनो बहुलः । द्विपक्षो मासः । त्रिंशदहोरात्रः प्रकर्ममासः । सार्धस्सौरः । अर्धन्यूनश्चान्द्रमासः । सप्तविंशतिर्नक्षत्रमासः । द्वात्रिंशत् मलमासः । पञ्चत्रिंशदश्ववाहायाः । चत्वारिंशद्धस्तिवाहायाः ।

द्वौ मासावृतुः। श्रावणः प्रोष्ठपदश्च वर्षाः। आश्वयुजः कार्तिकश्च शरत्। मार्गशीर्षः पौषश्च हेमन्तः। माघः फाल्गुनश्च शिशिरः। चैत्रो वैशाखश्च वसन्तः। ज्येष्ठामूलीय आषाढश्च ग्रीष्मः। शिशिराद्युत्तरायणम् वर्षादि दक्षिणायनम्। द्व्ययनस्संवत्सरः। पञ्चसंवत्सरो युगमिति। दिवसस्य हरत्यर्कष्षष्टिभागमृतौ ततः। करोत्येकमहश्छेदं तथैवैकं च चन्द्रमाः॥ एवमर्धतृतीयानामब्दानामाधिमासकम्। ग्रीष्मे जनयतः पूर्वं पञ्चाब्दान्ते च पश्चिमम्। इत्यध्यक्षप्रचारे देशकालमानं विंशोऽध्यायः च आदित एकचत्वारिंशः।

# द्विचत्वारिंशोऽध्यायः

## शुल्काध्यक्षः

शुल्काध्यक्षः शुल्कशालाध्वजं च प्राङ्मुखं उदङ्मुखं वा महाद्वाराभ्याशे निवेशयेत्। शुल्कादायिनश्चत्वारः पञ्च वा सार्थोपयातान् वणिजो लिखेयुः—“ के कुतस्त्याः कियत्पण्याः क्व चाभिज्ञानमुद्रा वा कृता ” इति। अमुद्राणामत्ययो देयद्विगुणः। कूटमुद्राणां शुल्काष्टगुणो दण्डः। भिन्नमुद्राणामत्ययो घटिकास्थाने स्थानम्। राजमुद्रापरिवर्तने नामकृते वा सपादपणिकं वहनं दापयेत्। ध्वजमूलोपस्थितस्य प्रमाणमर्घं च वैदेहकाः पण्यस्य ब्रूयुः—“ एतत्प्रमाणेनार्घेण पण्यमिदं कः क्रेतेति ” त्रिरुद्घोषितमर्थिभ्यो दद्यात्। क्रेतृसङ्घर्षे मूल्यवृद्धिस्सशुल्का कोशं गच्छेत्। शुल्कभयात्पण्यप्रमाणं मूल्यं वा हीनं ब्रुवतस्तदतिरिक्तं राजा हरेत्। शुल्कमष्टगुणं वा दद्यात्। तदेव निविष्टपण्यस्य भाण्डस्य हीनप्रतिवर्णकेनार्घापकर्षणे सारभाण्डस्य फल्गुभाण्डेन प्रतिच्छादने च कुर्यात्। प्रतिक्रेतृभयाद्वा पण्यमूल्यादुपरि मूल्यं वर्धयतो मूल्यवृद्धिं राजा हरेत्, द्विगुणं वा शुल्कं कुर्यात्। तदेवाष्टगुणमध्यक्षस्य छादयतः। तस्माद्विक्रयः पण्यानां धृतो मितो गणितो वा कार्यः। तर्कः फल्गुभाण्डानामानुग्राहिकाणां च। ध्वजमूलमतिक्रान्तानां चाकृतशुल्कानां शुल्कादष्टगुणो दण्डः। पथिकोत्पथिकास्तद्विद्युः। वैवाहिकमन्वायनमौपायनिकं यज्ञकृत्यप्रसवनैमित्तिकं देवेज्याचौलोपनयनगोदानव्रतदीक्षणादिषु क्रियाविशेषेषु भाण्डमुच्छुल्कं गच्छेत्। अन्यथावादिनस्स्तेयदण्डः। कृतशुल्केनाकृतशुल्कं निर्वाहयतो द्वितीयमेकमुद्रया भित्वा पुटमपहरतो वैदेहकस्य तच्च तावच्च दण्डः। शुल्कस्थानाद्गोमयपलालं प्रमाणं कृत्वाऽपहरत उत्तमस्साहसदण्डः। शस्त्रवर्मकवचलोहरथरत्नधान्यपशूनामन्यतमानिर्वाह्यं निर्वाहयतो यथावघुषितो दण्डः पण्यनाशश्च। तेषामन्यतमस्यानयने बहिरेवोच्छुल्को विक्रयः। अन्तपालः सपादपणिकां वर्तनीं गृह्णीयात् पण्यवहनस्य, पणिकामेकखुरस्य, पशूनामर्धपणिकां, क्षुद्रपशूनां पादिकां, अंसभारस्य माषिकाम्। नष्टापहृतं च प्रतिविदध्यात्। वैदेश्यं सार्थं कृतसारफल्गुभाण्डविचयनमभिज्ञानं मुद्रां च दत्वा प्रेषयेदध्यक्षस्य। वैदेहकव्यञ्जनो वा सार्थप्रमाणं राज्ञः प्रेषयेत्। तेन प्रदेशेन राजा शुल्काध्यक्षस्य सार्थप्रमाणमुपदिशेत् सर्वज्ञत्वख्यापनार्थम्। ततस्सार्थमध्यक्षोऽभिगम्य ब्रूयात्—“ इदममुष्यामुष्य च सारभाण्डं फल्गुभाण्डं च न निगूहितव्यं एष राज्ञः प्रभावः ” इति। निगूहतःफल्गुभाण्डं शुल्काष्टगुणो दण्डः। सारभाण्डं सर्वापहारः।

राष्ट्रपीडाकरं भाण्डमुच्छिन्द्यादफलं च यत्। महोपकारमुच्छुल्कं कुर्याद्बीजं तु दुर्लभम्॥ इत्यध्यक्षप्रचारे शुल्काध्यक्ष एकविंशोऽध्यायः आदितो द्विचत्वारिंशः।

# त्रिचत्वारिंशोऽध्यायः



## शुल्कव्यवहारः

शुल्कव्यवहारो बाह्यमाभ्यन्तरं चातिथ्यम्। निष्क्राम्यं प्रवेश्यं च शुल्कम्। प्रवेश्यानां मूल्यपञ्चभागः। पुष्पफलशाकमूलकन्दवाल्लिक्यबीजशुष्कमत्स्यमांसानां षड्भागं गृह्णीयात्। शङ्खवज्रमणिमुक्ताप्रवालहाराणां तज्जातपुरुषैः कारयेत्

कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिः । क्षौमदुकूलक्रिमितानकङ्कटहरितालमनश्शिलहिङ्गुलुकलोहवर्णधातूनां चन्दनागरुकटुककिण्वावरणानां सुरादन्ताजिनक्षौमदुकूलनिकरास्तरणप्रावरणक्रिमिजातानामजैलकस्य च दशभागः, पञ्चदशभागो वा । वस्त्रचतुष्पदद्विपदसूत्रकार्पासगन्धभैषज्यकाष्ठवेणुवल्कलचर्ममृद्भाण्डानां धान्यस्नेहक्षारलवणमद्यपक्वान्नादीनां च विंशतिभागः पञ्चविंशतिभागो वा । द्वारादेयं शुल्कपञ्चभागः आनुग्राहिकं वा यथादेशोपकारं स्थापयेत् । जातिभूमिषु च पण्यानामविक्रयः । खनिभ्यो धातुपण्यादाने षट्छतमत्ययः । पुष्पफलवाटेभ्यः पुष्पफलादाने चतुष्पञ्चाशत्पणो दण्डः । षण्डेभ्यः शाकमूलकन्दादाने पादोनं द्विपञ्चाशत्पणो दण्डः । क्षेत्रेभ्यस्सर्वसस्यादाने त्रिपञ्चाशत्पणः । पणोऽध्यर्धपणश्च सीतात्ययः । अतो नवपुराणानां देशजातिचरित्रतः । पण्यानां स्थापयेच्छुल्कमत्ययं चापकारतः ॥ इत्यध्यक्षप्रचारे शुल्कव्यवहारो द्वाविंशोऽध्यायः । आदितस्त्रिचत्वारिंशः ।

---

# चतुश्चत्वारिंशोऽध्यायः

## सूत्राध्यक्षः

सूत्राध्यक्षः सूत्रवर्मवस्त्ररज्जुव्यवहारं तज्जातपुरुषैः कारयेत् । ऊर्णावल्ककार्पासतूलशणक्षौमाणि च । विधवान्यङ्गाकन्याप्रव्रजितादण्डप्रतिकारिणीभी रूपाजीवामातृकाभिर्वृद्धराजदासीभिर्व्युपरतोपस्थानदेवदासीभिश्च कर्तयेत् । श्लक्ष्णस्थूलमध्यतां च सूत्रस्य विदित्वा वेतनं कल्पयेत् । बह्वल्पतां च । सूत्रप्रमाणं ज्ञात्वा तैलामलकोद्वर्तनैरेता अनुगृह्णीयात् । तिथिषु प्रतिपादनमानैश्च कर्म कारयितव्याः । सूत्रह्रासे वेतनह्रासो द्रव्यसारात् । कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिः कारुभिश्च कर्म कारयेत्, प्रतिसंसर्गं च गच्छेत् । क्षौमदुकूलक्रिमितानराङ्कवकार्पाससूत्रवानकर्मान्तांश्च प्रयुञ्जानो गन्धमाल्यदानैरन्यैश्चौपग्राहिकैराराधयेत् । वस्त्रास्तरणप्रावरणविकल्पानुत्थापयेत् । कङ्कटकर्मान्तांश्च तज्जातकारुशिल्पिभिः कारयेत् । याश्चानिष्कासिन्यः प्रोषितविधवान्यङ्गा कन्यका वाऽऽत्मानं बिभृयुस्ताः स्वदासीभिरनुसार्य सोपग्रहं कर्म कारयितव्याः । स्वयमागच्छन्तीनां वा सूत्रशालां प्रत्युषसि भाण्डवेतनविनिमयं कारयेत् । सूत्रपरीक्षार्थमात्रः प्रदीपः । स्त्रिया मुखसन्दर्शनेऽन्यकार्यसंभाषायां वा पूर्वस्साहसदण्डः । वेतनकालातिपातने मध्यमः । अकृतकर्मवेतनप्रदाने च । गृहीत्वा वेतनं कर्म अकुर्वन्त्याः अङ्गुष्ठसन्दंशनं दापयेत् । भक्षितापहृतावस्कन्दितानां च । वेतनेषु च कर्मकराणामपराधतो दण्डः । रज्जूवर्तकैर्वर्मकारैश्च स्वयं संसृज्येत । भाण्डादीनि च वरत्रादीनि वर्तयेत् ।

सूत्रवल्कमयी रज्जूर्वरत्रा वेत्रवैणवीः । सान्नाह्या बन्धनीयाश्च यानयुग्यस्य कारयेत् । इत्यध्यक्षप्रचारे सूत्राध्यक्षं त्रयो विंशोऽध्यायः आदितश्चतुश्चत्वारिंशः.

---

# पञ्चचत्वारिंशोऽध्यायः

## सीताऽध्यक्षः

सीताऽध्यक्षः कृषितन्त्रशुल्बवृक्षायुर्वेदज्ञस्तज्ज्ञसखो वा सर्वधान्यपुष्पफलशाककन्दमूलवाल्लिक्यक्षौमकार्पासबीजानि यथाकालं गृह्णीयात् । बहुहलपरिकृष्टायां स्वभूमौ दासकर्मकरदण्डप्रतिकर्तृभिर्वापयेत् । कर्षणयन्त्रोपकरणबलीवर्दैश्चैषामसङ्गं कारयेत् । कारुभिश्च कर्मारकुट्टाकमेदकरज्जुवर्तकसर्पग्राहादिभिश्च । तेषां कर्मफलविनिपाते तत्फलहानं दण्डः । षोडशद्रोणं जाङ्गलानां ध्यवर्षप्रमाणमध्यर्धमानूपानां, देशवापानामर्धत्रयोदशाश्मकानां, त्रयोविंशतिरवन्तीनाममितमपरान्तानां

हैमन्यानां च कुल्यावापानां च कालतः । वर्षत्रिभागः पूर्वपश्चिममासयोः, द्वौ त्रिभागौ मध्यमयोः सुषमा रूपम् । तस्योपलब्धिर्बृहस्पतेस्स्थानगमनगर्भाधानेभ्यः शुक्रोदयास्तमयचारेभ्यः सूर्यस्य प्रकृतिवैकृताच्च । सूर्याद्बीजसिद्धिः । बृहस्पतेस्सस्यानां स्तम्बकरिता । शुक्राद्वृष्टिरिति । त्रयस्सप्ताहिका मेघा अशीतिः कणशीकराः । षष्टिरातपमेघानां एषा वृष्टिस्समाहिता ॥ वातमातपयोगं च विभजन्यत्र वर्षति । त्रीन् कर्षकांश्च जनयन् तत्र सस्यागमो ध्रुवः ॥ ततः प्रभूतोदकमल्पोदकं वा सस्यं वापयेत् । शालिव्रीहिकोद्रवतिलप्रियङ्गुदारकवरकाः पूर्ववापाः । मुद्गमाषशैंब्या मध्यवापाः । कुसुम्भमसूरकुलुत्थयवगोधूमकलायातसीसर्षपाः पश्चाद्वापाः । यथर्तुवशेन वा बीजवापाः । वापातिरिक्तमर्धसीतिकाः कुर्युः । स्ववीर्योपजीविनो वा चतुर्थपञ्चभागिकाः यथेष्टमनवसितभागं दद्युरन्यत्र कृच्छ्रेभ्यः । स्वसेतुभ्यः हस्तप्रावर्तिममुदकभागं पञ्चमं दद्युः । स्कन्धप्रावर्तिमं चतुर्थम् । स्रोतोयन्त्रप्रावर्तिमं च तृतीयम् । चतुर्थं नदीसरस्तटाककूपोद्घाटम् । कर्मोदकप्रमाणेन कैदारं हैमनं ग्रैष्मिकं वा सस्यं स्थापयेत् । शाल्यादि ज्येष्ठम् । षण्डो मध्यमः । इक्षुः प्रत्यवरः । इक्षवो हि बह्वाबाधा व्ययग्राहिणश्च । फेनाघातो वल्लीफलानां, परिवाहान्ताः पिप्पलीमृद्वीकेक्षूणां, कूपपर्यन्ताः शाकमूलानां, हरणीपर्यन्ता हरितकानां, पाल्यो लवानां, गन्धभैषज्योशीरह्रीबेरपिण्डालुकादीनां, यथास्वं भूमिषु च स्थल्याश्च अनूप्याश्चोषधीस्स्थापयेत् । तुषारपायनमुष्णशोषणं चासप्तरात्रादिति धान्यबीजानां, त्रिरात्रं पंचरात्रं वा कोशीधान्यानां, मधुघृतसूकरवसाभिश्शकृद्युक्ताभिः काण्डबीजानां, छेदलेपो मधुघृतेन कन्दानाम्, अस्थिबीजानां शकृदालेपः, शाखिनां गर्तदाहो गोस्थिशकृद्भिः काले दौहृदं च । प्ररूढांश्चाशुष्ककटुमत्स्यांश्च स्नुहिक्षीरेण पाययेत् । कार्पससारं निर्मोकं सर्पस्य च समाहरेत् ॥ न सर्पास्तत्र तिष्ठंति धूमो यत्रैष तिष्ठति । सर्वबीजानां तु प्रथमवापे सुवर्णोदकसंप्लुतां पूर्वमुष्टिं वापयेत् । अमुं च मन्त्रं ब्रूयात् “प्रजापतये काश्यपाय देवाय च नमः सदा । सीता मे ऋध्यतां देवी बीजेषु च धनेषु च ” षण्डवाटगोपालकदासकर्मकरेभ्यो यथापुरुषपरिवापं भक्तं कुर्यात् । सपादपणिकं मासं दद्यात् । कर्मानुरूपं कारुभ्यो भक्तवेतनम् । प्रशीर्णं च पुष्पफलं देवकार्यार्थं व्रीहियवमाग्रयणार्थं श्रोत्रियास्तपस्विनश्चाहरेयुः । राशिमूलमुञ्छवृत्तयः । यथाकालं च सस्यादि जातं जातं प्रवेशयेत् । न क्षेत्रे स्थापयेत्किंचित्पलालमपि पाण्डितः ॥ प्रकराणां समुच्छ्रायान् वलभीर्वा तथाविधाः । न संहतानि कुर्वीत न तुच्छानि शिरांसि च ॥ खलस्य प्रकरान्कुर्यान्मण्डलान्ते समाश्रितान् । अनग्निकास्सोदकाश्च खले स्युः परिकर्मिणः । इत्यध्यक्षप्रचारे सीताध्यक्षः चतुर्विंशोऽध्यायः आदितः पञ्चचत्वारिंशः ॥

---

# षट्चत्वारिंशोऽध्यायः



## सुराध्यक्षः

सुराध्यक्षस्सुराकिण्वव्यवहारान् दुर्गे जनपदे स्कन्धावारे वा तज्जातसुराकिण्वव्यवहारिभिः कारयेत् । एकमुखमनेकमुखं वा विक्रयक्रयवशेन वा । षट्छतमत्ययमन्यत्र कर्तृक्रेतृविक्रेतृणां स्थापयेत् । ग्रामादनिर्णयनमसम्पातं च सुरायाः, प्रमादभयात्कर्मसु निर्दिष्टानां, मर्यादातिक्रमभयादार्याणां, उत्साहभयाच्च तीक्ष्णानां । लक्षितमल्पं वा चतुर्भागमर्धकुडुबं कुडुबमर्धप्रस्थं प्रस्थं वेति ज्ञातशौचा निर्हरेयुः । पानागारेषु वा पिबेयुरसञ्चारिणः । निक्षेपोपनिधिप्रयोगापहृतादीनामनिष्टोपगतानां च द्रव्याणां ज्ञानार्थमस्वामिकं कुप्यं हिरण्यं चोपलभ्य निक्षेप्तारमन्यत्र व्यपदेशेन ग्राहयेत् । अतिव्ययकर्तारमनायतिव्ययं च । न चानर्घेण कालिकां वा सुरां दद्यादन्यत्र दुष्टसुरायाः । तामन्यत्र विक्रापयेत् । दासकर्मकरेभ्यो वा वेतनं दद्यात् । वाहनप्रतिपानं सूकरपोषणं वा दद्यात् । पानागाराण्यनेककक्ष्याणि विभक्तशयनासनवन्ति पानोद्देशानि गन्धमाल्योदकवन्त्यृतुसुखानि कारयेत् ।

तत्रस्थाः प्रकृत्यौत्पत्तिकौ व्ययौ गूढा विद्युरागन्तूंश्च । क्रेतॄणां मत्तसुप्तानामलङ्काराच्छादनहिरण्यानि च विद्युः । तन्नाशे वणिजस्तच्च तावच्च दण्डं दद्युः । वणिजस्तु संवृतेषु कक्ष्याविभागेषु स्वदासीभिः पेशलरूपाभिरागन्तूनां वास्तव्यानां च आर्यरूपाणां मत्तसुप्तानां भावं विद्युः । मेदकप्रसन्नाऽऽसवारिष्टमैरेयमधूनां । उदकद्रोणं तण्डुलानामर्धाढकं त्रयः प्रस्थाः किण्वस्येति मेदकयोगः । द्वादशाढकं पिष्टस्य पञ्च प्रस्थाः किण्वस्य पुत्रकत्वक्फलयुक्तो वा जातिसम्भारः प्रसन्नायोगः । कपित्थतुला फाणितं पञ्चतौलिकं प्रस्थो मधुन इत्यासवयोगः पादाधिको ज्येष्ठः पादहीनः कनिष्ठः । चिकित्सकप्रमाणाः प्रत्येकशो विकाराणामरिष्टाः । मेषशृङ्गित्वक्काथाभिषुतो गुडप्रतीवापः पिप्पलीमरिचसम्भारस्त्रिफलायुक्तो वा मैरेयः । गुडयुक्तानां वा सर्वेषां त्रिफलासम्भारः । मृद्वीकारसो मधु । तस्य स्वदेशो व्याख्यानं कापिशायनं हारहूरकमिति । माषकलनीद्रोणमामं सिद्धं वा त्रिभागाधिकतण्डुलं मोरटादीनां कार्षिकभागयुक्तं किण्वाबन्धः । पाठालोध्रतेजोवत्येलावालुकमधुमधुरसाप्रियङ्गुदारुहरिद्रामरिचपिप्पलीनां च पञ्चकार्षिकः सम्भारयोगो मेदकस्य । प्रसन्नायाश्च । मधुकनिर्यूहयुक्ता कटशर्करा वर्णप्रसादिनी च । चोचचित्रकविलङ्गगजपिप्पलीनां च कार्षिकः । क्रमुकमधुकमुस्तालोध्राणां द्विकार्षिकश्चासवसम्भारः । दशभागश्चैषां बीजबन्धः । प्रसन्नायोगश्श्वेतसुरायाः । सहकारसुरा रसोत्तरा बीजोत्तरा वा महासुरा सम्भारिकी वा । तासां मोरटापलाशपत्तूरमेषशृङ्गीकरञ्जक्षीरवृक्षकषायभावितं दग्धकटशर्कराचूर्णं लोध्रचित्रकविलङ्गपाठामुस्ताकालिङ्गयवदारुहरिद्रेन्दीवरशतपुष्पापामार्गसप्तपर्णनिम्बास्फोतकल्कार्धयुक्तमन्तर्नखो मुष्टिः कुम्भीं राजपेयां प्रसादयति । फाणितः पञ्चपलिकश्चात्र रसवृद्धिर्देयः । कुटुम्बिनः कृत्येषु श्वेतसुरामौषधार्थं वारिष्टमन्यद्वा कर्तुं लभेरन् । उत्सवसमाजयात्रासु चतुरहस्सौरिको देयः । तेष्वनुज्ञातानां प्रवहणान्तं दैवसिकमत्ययं गृह्णीयात् । सुराकिण्वविचयं स्त्रियो बालाश्च कुर्युः । अराजपण्याः पञ्चकं शतं शुल्कं दद्युः । सुरकामेदकारिष्टमधुफलाम्लाम्लशीधूनां च । अह्नश्च विक्रयं व्याजीं ज्ञात्वा मानहिरण्ययोः । तथा वैधरणं कुर्यादुचितं चानुवर्तयेत् ॥ इत्यध्यक्षप्रचारे सुराऽध्यक्षः पञ्चविंशोऽध्यायः आदितष्षट्चत्वारिंशः ।

---

# सप्तचत्वारिंशोऽध्यायः

## सूनाध्यक्षः

सूनाध्यक्षः प्रदिष्टाभयानामभयवनवासिनां च मृगपशुपक्षिमत्स्यानां बन्धवधहिंसायामुत्तमं दण्डं कारयेत् । कुटुम्बिनामभयवनपरिग्रहेषु मध्यमं । अप्रवृत्तवधानां मत्स्यपक्षिणां बन्धवधहिंसायां पादोनसप्तविंशतिपणमत्ययं कुर्यात् । मृगपशूनां द्विगुणं । प्रवृत्तहिंसानामपरिगृहीतानां षड्भागं गृह्णीयात् । मत्स्यपक्षिणां दशभागं वाधिकं मृगपशूनां शुल्कं वाधिकम् । पक्षिमृगाणां जीवच्छड्भागमभयवनेषु प्रमुञ्चेत् । सामुद्रहस्त्यश्वपुरुषवृषगर्दभाकृतयो मत्स्याः सारसा नादेयास्तटाककुल्योद्भवा वा । क्रौञ्चोत्क्रोशकदात्यूहहंसचक्रवाकजीवञ्जीवकभृङ्गराजचकोरमत्तकोकिलमयूरशुकमदनशारिका विहारपक्षिणो मङ्गल्याश्चान्येपि प्राणिनः पक्षिमृगा हिंसाबाधेभ्यो रक्ष्याः । रक्षातिक्रमे पूर्वस्साहसदण्डः । मृगपशूनामनस्थिमांसं सद्योहतं विक्रीणीरन् । आस्थिमतः प्रतिपातं दद्युः । तुलाहीने हीनाष्टगुणं । वत्सो वृषो धेनुश्चैषामवध्याः । घ्नतः पञ्चाशत्को दण्डः । क्लिष्टघातं घातयतश्च । परिसूनमशिरःपादास्थि विगन्धं स्वयंमृतं च न विक्रीणीरन् । अन्यथा द्वादशपणो दण्डः । दुष्टाः पशुमृगव्याला मत्स्याश्चाभयचारिणः । अन्यत्र गुप्तिस्थानेभ्यो वधबन्धमवाप्नुयुः । इत्यध्यक्षप्रचारे सूनाध्यक्षः षड्विंशोध्यायः आदितस्सप्तचत्वारिंशः ॥

# अष्टचत्वारिंशोऽध्यायः



## गणिकाऽध्यक्षः

गणिकाध्यक्षः गणिकान्वयमगणिकान्वयां वा रूपयौवनशिल्पसम्पन्नां सहस्रेण गणिकां कारयेत्। कुटुम्बार्धेन प्रतिगणिकाम्। निष्पतिता प्रेतयोर्दुहिता भगिनी वा कुटुम्बं भरेत। तन्माता वा प्रतिगणिकां स्थापयेत्। तासामभावे राजा हरेत्। सौभाग्यालंकारवृद्ध्या सहस्रेण वारं कनिष्ठं मध्यमुत्तमं वाऽऽरोपयेत्। छत्रभृङ्गारव्यजनशिबिकापीठिकारथेषु च विशेषार्थम्। सौभाग्यभङ्गे मातृकां कुर्यात्। निष्क्रयश्चतुर्विंशतिसाहस्रो गणिकायाः। द्वादशसाहस्रो गणिकापुत्रस्य। अष्टवर्षात्प्रभृति राज्ञः कुशीलवकर्म कुर्यात्। गणिका दासी भग्नभोगा कोष्ठागारे महानसे वा कर्म कुर्यात्। अविशन्ती सपादपणमवरुद्धा मासवेतनं दद्यात्। भोगं दायमायव्ययमायतिं च गणिकायाः निबन्धयेत्। अतिव्ययकर्म च वारयेत्। मातृहस्तादन्यत्राभरणन्यासे सपादचतुष्पणो दण्डः। स्वापतेयं विक्रयमाधानं नयन्त्यास्सपादपञ्चाशत्पणो दण्डः। चतुर्विंशतिपणो वाक्पारुष्ये। द्विगुणो दण्डपारुष्ये। सपादपञ्चाशत्पणः पणोर्धपणश्च कर्णच्छेदने। अकामायाः कुमार्या वा साहसे उत्तमो दण्डः। सकामायाः पूर्वः साहसदण्डः। गणिकामकामां रुन्धतो निष्पातयतो वा व्रणविदारणेन वा रूपमुपघ्नतः सहस्रं दण्डः। स्थानविशेषेण वा दण्डवृद्धिरानिष्क्रयद्विगुणात्पणसहस्रं वा दण्डः। प्राप्ताधिकारां गणिकां घातयतो निष्क्रयत्रिगुणो दण्डः। मातृकादुहितृकारूपदासीनां घात उत्तमस्साहसदण्डः। सर्वत्र प्रथमेऽपराधे प्रथमः; द्वितीये द्विगुणः; तृतीये त्रिगुणः, चतुर्थे यथाकामी स्यात्।

राजाज्ञया पुरुषमनभिगच्छन्ती गणिका शिफासहस्रं लभेत; पञ्चसहस्रं वा दण्डः। भोगं गृहीत्वा द्विषत्या भोगद्विगुणो दण्डः। वसति भोगापहारे भोगमष्टगुणं दद्यात् अन्यत्र व्याधिपुरुषदोषेभ्यः। पुरुषं घ्नत्याश्चिताप्रतापोऽप्सु प्रवेशनं वा। गणिकाऽऽभरणार्थं भोगं वाऽपहरतोऽष्टगुणो दण्डः। गणिका भोगमायतिं पुरुषं च निवेदयेत्। एतेन नटनर्तकगायकवादकवाग्जीवनकुशीलवप्लवकसौभिकचारणानां स्त्रीव्यवहारिणां स्त्रियो गूढाजीवाश्च व्याख्याताः। तेषां तूर्यमागन्तुकं पञ्चपणं प्रेक्षावेतनं दद्यात्। रूपाजीवा भोगद्वयगुणं मासं दद्युः। गीतवाद्यपाठ्यनृत्तनाट्याक्षरचित्रवीणावेणुमृदङ्गपराचित्तज्ञानगन्धमाल्यसंयूहनसंपादनसंवाहनवैशिककलाज्ञानानि गणिका दासी रङ्गोपजीविनीश्च ग्राहयतो राजमण्डलादाजीवं कुर्यात्। गणिकापुत्रान् रङ्गोपजीविनश्च मुख्यान्निष्पादयेयुः सर्वतालावचराणां च। संज्ञाभाषान्तरज्ञाश्च स्त्रियस्तेषामनात्मसु। चारघातप्रमादार्थं प्रयोज्या बन्धुवाहनाः॥ इत्यध्यक्षप्रचारे गणिकाध्यक्षस्सप्तविंशोध्यायः आदितोऽष्टचत्वारिंशः।

---

# एकोनपञ्चाशोऽध्यायः



## नावध्यक्षः

नावध्यक्षस्समुद्रसंयाननदीमुखतरप्रचारान् देवसरोविसरोनदीतरांश्च स्थानीयादिष्ववेक्षेत। तद्वेलाकूलग्रामाः क्लृप्तं दद्युः। मत्स्यबन्धका नौकाभाटकं षड्भागं दद्युः। पत्तनानुवृत्तं शुल्कभागं वणिजो दद्युः। यात्रावेतनं राजानौभिस्सम्पतन्तः। शङ्खमुक्ताग्राहिणो नौभाटकान्दद्युः स्वनौभिर्वा तरेयुः। अध्यक्षश्चैषां खन्यध्यक्षेण व्याख्यातः। पत्तनाध्यक्षनिबन्धं पण्यपत्तनचारित्रं नावध्यक्षः पालयेत्। मूढवाताहतां तां पितेवानुगृह्णीयात्। उदकप्राप्तं पण्यमशुल्कमर्धशुल्कं वा कुर्यात्। यथा निर्दिष्टाश्चैताः पण्यपत्तनयात्राकालेषु प्रेषयेत्। संयातीर्नावः क्षेत्रानुगताः शुल्कं याचेत। हिंस्रिका निर्घातयेत्। अमित्रविषयातिगाः पण्यपत्तनचारित्रोपघातिकाश्च। शासकनियामकदात्ररश्मिग्राहकोत्सेचका

धिष्ठितश्च महानावो हेमन्तग्रीष्मतार्यासु महानदीषु प्रयोजयेत् । क्षुद्रिकाः क्षुद्रिकासु वर्षास्राविणीषु । बद्धतीर्थाश्चैताः कार्याः राजद्विष्टकारिणां तरणभयात् । अकालेऽतीर्थे च चरतः पूर्वस्साहसदण्डः । काले तीर्थे च अनिसृष्टतारिणः पादोनसप्तविंशतिपणः तरात्ययः । कैवर्तकाष्ठतृणभारपुष्पफलवाटषण्डगोपालकानामनत्ययस्सम्भाव्यदूतानुपातिनां च सेनाभाण्डप्रचारप्रयोगाणां च; स्वतरणैस्तरतां; बीजभक्तद्रव्योपस्करांश्चानूपग्रामाणां तारयताम् । ब्राह्मणप्रव्रजितबालवृद्धव्याधितशासनहरगर्भिण्यो नावाध्यक्षमुद्राभिस्तरेयुः । कृतप्रवेशाः पारविषयिकाः सार्थप्रमाणा वा विशेयुः । परस्य भार्यां कन्यां वित्तं वाऽहरन्तं शङ्कितमाविग्नमुद्भाण्डीकृतं महाभाण्डेन मूर्ध्नि भारेणावच्छादयन्तं सद्योगृहीतलिङ्गिनं अलिङ्गिनं वा प्रव्रजितमलक्ष्यव्याधितं भयविकारिणं गूढसारभाण्डशासनशस्त्राग्नियोगं विषहस्तं दीर्घपथिकममुद्रं चोपग्राहयेत् । क्षुद्रपशुर्मनुष्यश्च सभारो माषकं दद्यात् । शिरोभारः कायभारो गवाश्वं च द्वौ । उष्ट्रमहिषं चतुरः । पञ्च लघुयानम् । षड् गोलिङ्गम् । सप्त शकटम् । पण्यभारः पादम् । तेन भाण्डभारो व्याख्यातः । द्विगुणो महानदीषु तरः । क्लृप्तमानूपग्रामा भक्तवेतनं दद्युः । प्रत्यन्तेषु तराः शुल्कमातिवाहिकं वर्तनीं च गृह्णीयुः । निर्गच्छतश्चामुद्रस्य भाण्डं हरेयुः । अतिभारेणावेलायामतीर्थे तरतश्च । पुरुषोपकरणहीनायामसंस्कृतायां वा नावि विपन्नायां नावध्यक्षो नष्टं विनष्टं वाऽभ्यावहेत् । सप्ताहवृत्तामाषाढीं कार्तिकीं चान्तरा तरः । कार्मिकप्रत्ययं दद्यान्नित्यं चाह्निकमावहेत् ॥ इत्यध्यक्षप्रचारे नावध्यक्ष अष्टाविंशोऽध्यायः आदित एकोनपञ्चाशः ।

---

# पञ्चाशोऽध्यायः

## गोऽध्यक्षः

गोऽध्यक्षो वेतनोपग्राहिकं करप्रतिकरं भग्नोत्सृष्टकं भागानुप्रविष्टकं व्रजपर्यग्रं नष्टं विनष्टं क्षीरघृतसञ्जातं चोपलभेत । गोपालकपिण्डारकदोहकमन्थकलुब्धकाः शतं शतं धेनूनां हिरण्यभृताः पालयेयुः । क्षीरघृतभृता हि वत्सानुपहन्युरिति वेतनोपग्राहिकम् । जरद्गुधेनुगर्भिणीपष्ठौहीवत्सतरीणां समविभागं रूपशतमेकः पालयेत् । घृतस्याष्टौ वारकान् पणिकं पुच्छं अङ्कचर्म वार्षिकं दद्यादिति करप्रतिकरः । व्याधितान्यङ्गानन्यदोहीदुर्दोहापुत्रघ्नीनां च समविभागं रूपशतं पालयन्तस्तज्जातिकं भागं दद्युरिति भग्नोत्सृष्टम् । परचक्राटवीभयादनुप्रविष्टानां पशूनां पालनधर्मेण दशभागं दद्युरिति भागानुप्रविष्टकम् । वत्सा वत्सतरा दम्या वहिनो वृषा उक्षाणश्च पुङ्गवाः । युगवाहनशकटवहा वृषभाः सूनामहिषाः पृष्ठस्कन्धवाहिनश्च महिषाः । वत्सिका वत्सतरी पष्ठौही गर्भिणी धेनुश्चाप्रजाता वन्ध्याश्च गावो महिष्यश्च । मासद्विमासजातास्तासामुपजा । वत्सा वत्सिकाश्च मासद्विमासजातानङ्कयेत् । मासद्विमासपर्युषितमङ्कयेत् । अङ्कं चिह्नं वर्णं शृङ्गान्तरं च लक्षणमेवमुपजा निबन्धयेदिति व्रजपर्यग्रम् । चोरहृतमन्ययूथप्रविष्टमवलीनं वा नष्टम् । पङ्कविषमव्याधिजरातोयाहारावसन्नं वृक्षातटकाष्ठशिलाभिहतमीशानव्यालसर्पग्राहदावाग्निविपन्नं विनष्टं प्रमादादभ्यावहेयुः । एवं रूपाग्रं विद्यात् । स्वयं हन्ता घातयिता हर्ता हारयिता च वध्यः । परपशूनां राजाङ्केन परिवर्तयिता रूपस्य पूर्वं साहसदण्डं दद्यात् । स्वदेशीयानां चोरहृतं प्रत्यानीय पणितं रूपं हरेत् । परदेशीयानां मोक्षयिताऽर्धं हरेत् । बालवृद्धव्याधितानां गोपालकाः प्रतिकुर्युः । लुब्धकश्वगणिभिरपास्तस्तेनव्यालपरबाधभयमृतुविभक्तमरण्यं चारयेयुः । सर्पव्यालत्रासनार्थं गोचरानुपातज्ञानार्थं च त्रस्नूनां घण्टातूर्यं च बध्नीयुः । समव्यूढतीर्थमकर्दमग्राहमुदकमवतारयेयुः पालयेयुश्च । स्तेनव्यालसर्पग्राहगृहीतं व्याधिजराऽवसन्नं च आवेदयेयुरन्यथा रूपमूल्यं भजेरन् । कारणमृतस्याङ्कचर्म गोमहिषस्य कर्णलक्षणमजाविकानां पुच्छमङ्कचर्म चाश्वखरोष्ट्राणां वालचर्मबस्तिपित्तस्नायुदन्तखुरशृङ्गास्थीनि चाहरेयुः । मांसमाममार्द्रं शुष्कं वा विक्रीणीयुः । उदश्वित् श्ववराहेभ्यो दद्युः । कूर्चिकां सेनाभक्तार्थमाहरेयुः । किण्विकाऽऽतञ्चनं भक्तार्थमाहरेयुः । कलिराटो घाणपिण्याकक्लेदार्थः ।

पशुविक्रेता पादिकं रूपं दद्यात् । वर्षाशरद्धेमन्तानुभयतः कालं दुह्युः । शिशिरवसन्तग्रीष्मानेककालम् । द्वितीयकालदोग्धु-रङ्गुष्ठच्छेदो दण्डः । दोहकालमतिक्रामतस्तत्फलहानं दण्डः । एतेन नस्यदम्ययुगपिङ्गनवर्तनकाला व्याख्याताः । क्षीरद्रोणे गवां घृतप्रस्थः; पञ्चभागाधिको महिषीणां; द्विभागाधिकोऽजावीनां; मन्थो वा सर्वेषां प्रमाणं भूमितृणोदकविशे-षाद्धि क्षीरघृतवृद्धिर्भवति । यूथवृषं वृषेणावपातयतः पर्वः साहसदण्डः घातयत उत्तमः । वर्णावरोधेन दशतीरक्षा । उपनिवेशदिग्विभागो गोप्रचारात् बलान्वयतो वा गवां रक्षासामर्थ्याच्च । अजादीनां षाण्मासिकीमूर्णां ग्राहयेत् । तेनाश्व-खरोष्ट्रवराहव्रजा व्याख्याताः । बलीवर्दानां नस्याश्वभद्रगतिवाहिनां यवसस्यार्थभारः तृणस्य द्विगुणं; तुला घाणपिण्या-कस्य; दशाढकं कणकुण्डकस्य; पञ्चपलिकं मुखलवणं; तैलकुडुम्बो नस्यं; प्रस्थः पानं; मांसतुलाः, दध्नश्चाढकं; यवद्रोणं, माषाणां वा पुलाकः; क्षीरद्रोणमर्धाढकं वा सुरायाः; स्नेहप्रस्थः क्षारदशफलं, शृङ्गिबेरपलं च प्रतिपानम् । पादोनमश्वतर-गोखराणां द्विगुणं महिषोष्ट्राणां कर्मकरबलीवर्दानां पायनार्थं च धेनूनां । कर्मकालतः फलतश्च विधानम् । सर्वेषां तृणो-दकप्राकाम्यमिति गोमण्डलं व्याख्यातम् । पञ्चर्षभं खराश्वानामजावीनां दशर्षभम् । शत्यं गोमहिषोष्ट्राणां यूथं कुर्याच्चतु-र्वृषम् । इत्यध्यक्षप्रचारे गोऽध्यक्ष एकोनत्रिंशोऽध्यायः आदित पञ्चाशः ।

---

# एकपञ्चाशोऽध्यायः



## अश्वाध्यक्षः

अश्वाध्यक्षः पण्यागारिकं क्रयोपागतमाहवलब्धमाजातं साहाय्यकागतकं पणस्थितं यावत्कालिकं वाऽश्वपर्यग्रं कुल-वयो वर्णचिह्नकर्मवर्गागमैर्लेखयेत् । अप्रशस्तन्यङ्गव्याधितांश्चावेदयेत् । कोशकोष्ठागाराभ्यां च गृहीत्वा मासलाभमश्ववाह-श्चिन्तयेत् । अश्वविभवेनायतामश्वायामद्विगुणविस्तारां चतुर्द्वारोपावर्तनमध्यां सप्रग्रीवां प्रद्वारासनफलकयुक्तां वानरमयूरपृ-षतनकुलचकोरशुकशारिकाभिराकीर्णां शालां निवेशयेत् । अश्वायामचतुरश्रश्लक्ष्णफलकास्तारं सखादनकोष्ठकं समूत्रपुरी-षोत्सर्गमेकैकशः प्राङ्मुखं वा स्थानं निवेशयेत् । शालावशेन वा दिग्विभागं कल्पयेत् । वडवावृषकिशोराणां एकान्तेषु । वडवायाः प्रजातायास्त्रिरात्रं घृतप्रस्थपानं; अत ऊर्ध्वं सक्तुप्रस्थः स्नेहभैषज्यप्रतिपानं दशरात्रं; ततः पुलाको यवसमार्तवश्चाहारः । दशरात्रादूर्ध्वं किशोरस्य घृतचतुर्भागः सक्तुकुडुबः । क्षीरप्रस्थश्चाहार आषण्मासादिति । ततः परं मासोत्तरमर्धवृद्धिर्यवप्रस्थ आत्रिवर्षात्; द्रोण आचतुर्वर्षादिति; अत ऊर्ध्वं चतुर्वर्षः पञ्चवर्षो वा कर्मण्यः पूर्णप्रमाणः । द्वात्रिंशदङ्गुलं मुखमुत्तमाश्वस्य, पञ्चमुखान्यायामः, विंशत्यङ्गुला जङ्घा, चतुर्जङ्घ उत्सेधः, त्र्यङ्गुलावरं मध्यमावरयोः, शताङ्गुलः परिणाहः, पञ्चभागावरं मध्यमावरयोः । उत्तमाश्वस्य द्विद्रोणं शालिव्रीहियवप्रियङ्गूणामर्धशुष्कमर्धसिद्धं वा मुद्गमाषाणां वा पुलाकः । स्नेहप्रस्थश्च पञ्चपलं लवणस्य मांसं पञ्चाशत्पलिकं रसस्याढकं द्विगुणं वा दध्नः पिण्डक्लेदनार्थं क्षारपञ्चपलिकः सुरायाः प्रस्थः पयसो वा द्विगुणः प्रति-पानं; दीर्घपथभारक्लान्तानां च खादनार्थं स्नेहप्रस्थोऽनुवासनं कुडुम्बो नस्यकर्मणः यवसस्यार्धभारः तृणस्य द्विगुणः षडरत्निः परिक्षेपः पुञ्जीलग्राहो वा । पादावरमेतन्मध्यमावरयोः । उत्तमसमो रथ्यो वृषश्च मध्यमः । मध्यमसमश्चावरः । पादहीनं वडवानां पारशमानां च । अतोऽर्धं किशोराणां च इति विधायोगः । विधापाचकसूत्रग्राहकचिकित्सकाः प्रति-स्वादभाजः । युद्धव्याधिजराकर्मक्षीणाः पिण्डगोचरिकाः स्युरसमरप्रयोग्याः । पौरजानपदानामर्थेन वृषा वडवास्वायोज्याः ।

प्रयोग्यानामुत्तमाः काम्भोजकसैन्धवारट्टजवानायुजाः । मध्यमा बाह्लीकपापेयकसौवीरकतैतलाः शेषाः प्रत्यवराः । तेषां तीक्ष्णभद्रमन्दवशेन सान्नाह्यमौपवाह्यकं वा कर्म प्रयोजयेत् । चतुरश्रं कर्माश्वस्य सान्नाह्यम् । वल्गनो नीचैर्गतो लङ्घनो धोरणो नारोष्ट्रश्चौपवाह्याः । तत्रौपवेणुको वर्धमानको यमक आलीढप्लुतः पृथगस्तुवचाली च वल्गनः ।

स एव शिरःकर्णविशुद्धो नीचैर्गतः, षोडशमार्गो वा प्रकीर्णकः । प्रकीर्णोत्तरो निषण्णः पार्श्वानुवृत्त ऊर्मिमार्गः शरभक्रीडितश्शरभप्लुतः त्रितालः बाह्यानुवृत्तः पञ्चपाणिस्सिंहायतस्स्वाधूतः क्लिष्टः श्लिङ्गितो बृंहितः पुष्पाभिकीर्णश्चेति नीचैर्गत मार्गाः । कपिप्लुतो भेकप्लुत एणप्लुत एकपादप्लुतः कोकिलसंचार्युरस्यो बकचारी च लङ्घनः । काङ्को वारिकाङ्को मायूरोऽर्धमायूरो नाकुलोऽर्धनाकुलो वाराहोऽर्धवाराहश्चेति धोरणः । संज्ञाप्रतिकारो नारोष्ट्र इति ।

षण्णवं द्वादशेति योजनान्यध्वा रथ्यानां पञ्चयोजनान्यर्धाष्टमानि दशेति पृष्ठवाह्याना मश्वानामध्वा । विक्रमो भद्राश्वासो भारवाह्य इति मार्गाः विक्रमो वल्गितमुपकण्ठमुपजवो जवश्च धाराः । तेषां बन्धनोपकरणं योग्याचार्याः प्रतिदिशेयुः । साङ्ग्रामिकं रथाश्वालङ्कारं च सूताः । अश्वानां चिकित्सकाः शरीरह्रासवृद्धिप्रतीकारमृतुविभक्तं चाहारम् । सूत्रग्राहकाश्वबन्धकयावसिकविधापाचकस्थानपालकेशकारजाङ्गलीविदश्च स्वकर्मभिरश्वानाराधयेयुः । कर्मातिक्रमे चैषांदिवसवेतनच्छेदनं कुर्यात् । नीराजनोपरुद्धं वाहयतश्चिकित्सकोपरुद्धं वा द्वादशपणो दण्डः । क्रियाभैषज्यसङ्गेन व्याधिवृद्धौ प्रतीकारद्विगुणो दण्डः । तदपराधेन वैलोम्ये पत्रमूल्यं दण्डः । तेन गोमण्डलं खरोष्ट्रमहिषमजाविकं च व्याख्यातम् ।

द्विरह्नस्स्नानमश्वानां गन्धमाल्यं च दापयेत् । कृष्णसन्धिषु भूतेज्याः शुक्लेषु स्वस्तिवाचनम् । नीराजनामाश्वयुजे कारयेन्नवमेऽहनि । यात्रादाववसाने वा व्याधौ शान्तिके रतः । इत्यध्यक्षप्रचारे अश्वाध्यक्षः त्रिंशोऽध्यायः आदित एकपञ्चाशः ॥

---

# द्विपञ्चाशोऽध्यायः



## हस्त्यध्यक्षः

हस्त्यध्यक्षो हस्तिवनरक्षां दम्यकर्मशान्तानां हस्तिहस्तिनीकलभानां शालास्थानशय्याकर्मविधायवसप्रमाणं कर्मस्वायोगं बन्धनोपकरणं साङ्ग्रामिकमलङ्कारं चिकित्सकानीकस्थौपस्थायिकवर्गं चानुतिष्ठेत् । हस्त्यायामाद्विगुणोत्सेधविष्कम्भायामां हस्तिनीस्थानाधिकां सप्रग्रीवां कुमारीसङ्ग्रहां प्राङ्मुखीमुदङ्मुखीं वा शालां निवेशयेत् । हस्त्यायामचतुरश्रश्लक्ष्णालानस्तम्भफलकान्तरकं मूत्रपुरीषोत्सर्गस्थानं निवेशयेत् । स्थानसमशय्यामर्धापाश्रयां दुर्गे सान्नाह्योपवाह्यानां बहिर्दम्यव्यालानां । प्रथमसप्तमाष्टमभागावह्नस्स्नानकालौ तदनन्तरं विधायाः, पूर्वाह्णे व्यायामकालः, पश्चाह्नः प्रतिपानकालः । रात्रिभागौ द्वौ स्वप्नकालौ, त्रिभागस्संवेशनोत्थानिकः ग्रीष्मे ग्रहणकालः । विंशतिवर्षो ग्राह्यः । विक्को मूढो मत्कुणो व्याधितो गर्भिणी धेनुका हस्तिनी चाग्राह्याः । सप्तारत्निरुत्सेधो नवायामो दश परिणाहः । प्रमाणतश्च वारिंशद्वर्षो भवत्युत्तमः त्रिंशद्वर्षो मध्यमः । पञ्चविंशतिवर्षोऽवरः । तयोः पादावरो विधाविधिः । अरत्नौ तण्डुलद्रोणः, अर्धाढकं तैलस्य, सर्पिषस्त्रयः प्रस्थाः, दशपलं लवणस्य, मांसं पञ्चाशत्पलिकं, रसस्याढकं, द्विगुणं वा दध्नः, पिण्डक्लेदनार्थं क्षारं । दशपलिकं मद्यस्य आढकं द्विगुणं वा पयसः प्रतिपानम् । गात्रावसेकस्तैलप्रस्थः शिरसोऽष्टभागः प्रादीपिकश्च, यवसस्य द्वौ भारौ सपादौ शष्पस्य शुष्कास्यर्धतृतीयो भारः कडङ्करस्यानियमः । सप्तारत्निना तुल्यभोजनोऽष्टारत्निरत्यरालः । यथाहस्तमवशेषः षडरत्निः पञ्चारत्निश्च । क्षीरयावसिको विक्कः क्रीडार्थं ग्राह्यः । सञ्जातलोहिता प्रतिछन्ना संलिप्तपक्षा समकक्ष्याऽव्यतिकीर्णमांसा समतल्पतला जातद्रोणिकेति शोभाः ।

शोभावशेन व्यायामं भद्रं मन्दं च कारयेत् । मृगसङ्कीर्णलिङ्गं च कर्मस्वृतुवशेन वा ॥ इत्यध्यक्षप्रचारे हस्त्यध्यक्ष एकत्रिंशोऽध्यायः आदितो द्विपञ्चाशः ॥

---

# त्रिपञ्चाशोऽध्यायः



## हस्त्यध्यक्षे हस्तिप्रचारः.

कर्मस्कन्धाः चत्वारः दम्यस्सान्नाह्य औपवाह्यो व्यालश्च तत्र दम्यःपञ्चविधः—स्कन्धगतः स्तम्भवतो वारिगतो ऽवपातगतो यूथगतश्चेति । तस्योपविचारो विक्कर्म । सान्नाह्यस्सप्तक्रियापथः—उपस्थानं संवर्तनं संयानं वधावधो हस्तियुद्धं नागरायणं साङ्ग्रामिकं च । तस्योपविचारः कक्ष्याकर्म ग्रैवेयकर्म यूथकर्म च । औपवाह्योऽष्टविधः—आचरणः, कुञ्जरौपवाह्यः, धोरणः, आधानगतिकः, यष्ट्युपवाह्यः, तोत्रोपवाह्यः, शुद्धोपवाह्यः, मार्गायुकश्चेति । तस्योपविचारः शारदकर्म हीनकर्म नारोष्ट्रकर्म च । व्याल एकक्रियापथः । तस्योपविचार आयम्यैकरक्षः कर्मशङ्कितोऽवरुद्धो विषमः प्रभिन्नः प्रभिन्नविनिश्चयो मदहेतुविनिश्चयश्च । क्रियाविपन्नो व्यालः । शुद्धस्सुव्रतो विषमः सर्वदोषप्रदुष्टश्च । तेषां बन्धनोपकरणमनीकस्थप्रमाणं आलानग्रैवेयकक्ष्यापरायणपरिक्षेपोत्तरादिकं बन्धनं; अङ्कुशवेणुयन्त्रादिकमुपकरणं; वैजयन्तीक्षुरप्रमालास्तरणकुथादिकं भूषणं; वर्मतोमरशरावापयन्त्रादिकस्साङ्ग्रामिकालङ्कारः । चिकित्सकानीकस्थारोहकाधोरणहस्तिपकौपचारिकविधापाचकयावसिकपादपाशिककुटीरक्षकौपशायिकादिरौपस्थायिकवर्गः चिकित्सककुटीरक्षविधापाचकाः प्रस्थौदनं स्नेहप्रसृतिं क्षारलवणयोश्च द्विपलिकं हरेयुः । दशपलं मांसस्यान्यत्र चिकित्सकेभ्यः । पथि व्याधिकर्ममदजराऽभितप्तानां चिकित्सकाः प्रतिकुर्युः । स्थानस्याशुद्धिर्यवसस्याग्रहणं स्थले शायनमभागे घातः परारोहणमकालेयानमभूमावतीर्थेऽवतारणं तरुषण्ड इत्यत्ययस्थानानि । तमेषां भक्तवेतनादाददीत ॥

तिस्रो नीराजनाः कार्याश्चातुर्मास्यर्तुसान्धिषु । भूतानां कृष्णसन्धीज्यास्सेनान्यः शुक्लसन्धिषु ॥ दन्त मूलपरीणाहद्विगुणं प्रोज्झ्य कल्पयेत् । अब्दे द्व्यर्धे नदीजानां पञ्चाब्दे पर्वतौकसाम् ॥ इत्यध्यक्षप्रचारे हस्तिप्रचारो द्वात्रिंशोऽध्यायः आदितः त्रिपञ्चाशः

---

# चतुष्पञ्चाशोऽध्यायः



## रथाध्यक्षः पत्यध्यक्षः सेनापतिप्रचारः

अश्वाध्यक्षेण रथाध्यक्षो व्याख्यातः । स रथकर्मान्तान् कारयेत् । दशपुरुषो द्वादशान्तरो रथः ।

तस्मादेकान्तरावरा आषडन्तरादिति सप्तरथाः । देवरथपुष्यरथसाङ्ग्रामिकपारियाणिकपरपुराभियानिकवैनयिकांश्च रथान् कारयेत् । इष्वस्त्रप्रहरणावरणोपकरणकल्पनास्सारथिरथिकरथ्यानां च कर्मस्वायोगं विद्यात् । आकर्मभ्यश्च भक्तवेतनं भृतानामभृतानां च योग्यरक्षानुष्ठानमर्थमानकर्म च । एतेन पत्यध्यक्षो व्याख्यातः । स मौलभृतश्रेणिमित्रामित्राटवीबलानां सारफल्गुतां विद्यात् । निम्नस्थलप्रकाशकूटखनकाकाशदिवारात्रियुद्धव्यायामं च विद्यात् । आयोगमयोगं च कर्मसु । तदेव सेनापतिस्सर्वयुद्धप्रहरणविद्याविनीतो हस्त्यश्वरथचर्यासंघुष्टश्चतुरङ्गस्य बलस्यानुष्ठानाधिष्ठानं विद्यात् । स्वभूमिं युद्धकालं प्रत्यनीकमभिन्नभेदनं भिन्नसन्धानं संहतभेदनं भिन्नवधं दुर्गवधं यात्राकालं च पश्येत् । तूर्यध्वजपताकाभिर्व्यूहसंज्ञाः प्रकल्पयेत् । स्थाने याने प्रहरणे सैन्यानां विनये रतः ॥ इत्यध्यक्षप्रचारे रथाध्यक्षः पत्त्यध्यक्षः सेनापतिप्रचारश्च त्रयस्त्रिंशोध्यायः आदितः चतुष्पञ्चाशः ।

---

# पञ्चपञ्चाशोऽध्यायः ।



## मुद्राऽध्यक्षः, विवीताध्यक्षः ।

मुद्राऽध्यक्षो मुद्रां माषकेण दद्यात् । समुद्रो जनपदं प्रवेष्टुं निष्क्रमितुं वा लभेत । द्वादशपणममुद्रो जानपदो दद्यात् । कूटमुद्रायां पूर्वस्साहसदण्डः । तिरोजनपदस्योत्तमः । विवीताध्यक्षो मुद्रां पश्येत् । भयान्तरेषु च विवीतं स्थापयेत् । चोरव्यालभयान्निम्नारण्यानि शोधयेत् । अनुदके कूपसेतुबन्धोत्सान्, स्थापयेत्, पुष्पफलवाटांश्च । लुब्धकश्वगणिनः परिव्रजेयुररण्यानि । तस्करामित्राभ्यागमे शङ्खदुन्दुभिशब्दमग्राह्याः कुर्युः । शैलवृक्षाधिरूढा वा, शीघ्रवाहना वा अमित्राटवीसञ्चारं च राज्ञो गृहकपोतैर्मुद्रायुक्तैर्हारयेयुः धूमाग्निपरंपरया वा । द्रव्यहस्तिवनाजीवं वर्तनीं चोररक्षणम् । सार्थातिवाह्यं गोरक्ष्यं व्यवहारं च कारयेत् ॥ इत्यध्यक्षप्रचारे मुद्राऽध्यक्षो विवीताध्यक्षः चतुस्त्रिंशोऽध्यायः आदितः पञ्चपञ्चाशः ।

---

# षट्पञ्चाशोऽध्यायः ।



## समाहर्तृप्रचारः गृहपतिवैदेहकतापसव्यञ्जनाः प्रणिधयः ।

समाहर्ता चतुर्धा जनपदं विभज्य, ज्येष्ठमध्यमकनिष्ठविभागेन ग्रामाग्रं पारिहारकमायुधीयं धान्यपशुहिरण्यकुप्यविष्टि-( कर ) प्रतिकरमिदमेतावदिति निबन्धयेत् । तत्प्रदिष्टः पञ्चग्रामीं दशग्रामीं वा गोपश्चिन्तयेत् । सीमावरोधेन ग्रामाग्रं कृष्टाकृष्टस्थलकेदारारामषण्डवाटवनवास्तुचैत्यदेवगृहसेतुबन्धश्मशानसत्रप्रपापुण्यस्थानविवीतपथिसङ्ख्यानेन क्षेत्राग्रं; तेन सीम्नां क्षेत्राणां च मर्यादारण्यपथिप्रमाणसम्प्रदानविक्रयानुग्रहपरिहारनिबन्धान् कारयेत् । गृहाणां च करदाकरदसङ्ख्यानेनं । तेषु चैतावच्चातुर्वर्ण्यमेतावन्तः कर्षकगोरक्षकवैदेहककारुकर्मकरदासाश्चैतावच्च द्विपदचतुष्पदमिदं च हिरण्यविष्टिशुल्कदण्डं समुत्तिष्ठतीति । कुलानां च स्त्रीपुरुषाणां बालवृद्धकर्मचरित्राजीवव्ययपरिमाणं विद्यात् । एवं च जनपदचतुर्भागं स्थानिकः चिन्तयेत् । गोपस्थानिकस्थानेषु प्रदेष्टारः कार्यकरणं बलिप्रग्रहं च कुर्युः । समाहर्तृप्रदिष्टाश्च गृहपतिकव्यञ्जना येषु ग्रामेषु प्रणिहितास्तेषां ग्रामाणां क्षेत्रगृहकुलाग्रं विद्युः । मानसञ्जाताभ्यां क्षेत्राणि भोगपरिहाराभ्यां गृहाणि वर्णकर्मभ्यां कुलानि च । तेषांजङ्घाग्रमायव्ययौ च विद्युः । प्रस्थितागतानां च प्रवासावासकारणमनर्थ्यानां च स्त्रीपुरुषाणां चारप्रचारं च विद्युः । एवं वैदेहकव्यञ्जनाः स्वभूमिजानां राजपण्यानां खनिसेतुवनकर्मान्तक्षेत्रजानां परिमाणमर्घं च विद्युः । परभूमिजातानां वारिस्थलपथोपयातानां सारफल्गुपण्यानां कर्मसु च । शुल्कवर्तन्यातिवाहिकगुल्मतरदेयभागभक्तपण्यागारप्रमाणं विद्युः । एवं समाहर्तृप्रदिष्टास्तापसव्यञ्जनाः कर्षकगोरक्षकवैदेहकानामध्यक्षाणां च शौचाशौचं विद्युः । पुराणचोरव्यञ्जनाश्चान्तेवासिनश्चैत्यचतुष्पथशून्यपदोदपाननदीनिपानतीर्थायतनाश्रमारण्यशैलवनगहनेषु स्तेनामित्रप्रवीरपुरुषाणां च प्रवेशनस्थानगमनप्रयोजनान्युपलभेरन् । समाहर्ता जनपदं चिन्तयेदेवमुत्थितः । चिन्तयेयुश्च संस्थास्तास्संस्थाश्चान्यास्स्वयोनयः ॥ इत्यध्यक्षप्रचारे समाहर्तृप्रचारः गृहपतिवैदेहकतापसव्यञ्जनप्रणिधयश्च-पञ्चत्रिंशोऽध्यायः आदितष्षट्पञ्चाशः ।

---

# सप्तपञ्चाशोऽध्यायः ।



## नागरिकप्रणिधिः ।

समाहर्तृवन्नागरको नगरं चिन्तयेत् । दशकुलीं गोपो, विंशतिकुलीं चत्वारिंशत्कुलीं वा । स तस्यां स्त्रीपुरुषाणां जातिगोत्रनामकर्मभिः जङ्घाग्रमायव्ययौ च विद्यात् । एवं दुर्गचतुर्भागं स्थानिकश्चिन्तयेत् । धर्मावसाथिनः पाषण्डिपथिकानावेद्य वासयेयुः । स्वप्रत्ययाश्च तपस्विनश्श्रोत्रियांश्च कारुशिल्पिनस्स्वकर्मस्थानेषु स्वजनं वासयेयुः । वैदेहकाश्चान्योन्यं स्वकर्मस्थानेषु । पण्यानामदेशकालविक्रेतारमस्वकरणं च निवेदयेयुः । शौण्डिकपाक्वमांसिकौदनिकरूपाजीवाः परिज्ञातमावासयेयुः । अतिव्ययकर्तारमत्याहितकर्माणं च निवेदयेयुः । चिकित्सकः प्रच्छन्नव्रणप्रतीकारकारयितारमपथ्यकारिणं च गृहस्वामी च निवेद्य ( गोपस्था निवेद्य ) गोपस्थानिकयोर्मुच्येतान्यथा तुल्यदोषस्स्यात् । प्रस्थितागतौ च निवेदयेत् । अन्यथारात्रिदोषं भजेत् । क्षेमरात्रिषु त्रिपणं दद्यात् । पथिकोत्पथिकाश्च बहिरन्तश्च नगरस्य देवगृहपुण्यस्थानवनश्मशानेषु सव्रणमनिष्टोपकरणमुद्भाण्डीकृतमाविग्नमतिस्वप्नमध्वक्लान्तमपूर्वं वा गृह्णीयुः । एवमभ्यन्तरे शून्यनिवेशावेशनशौण्डिकौदनिकपाक्वमांसिकद्यूतपाषण्डावासेषु विचयं कुर्युः ।

अग्निप्रतीकारं च ग्रीष्मे । मध्यमयोरह्नश्चतुर्भागयोः । अष्टभागोऽग्निदण्डः । बहिरधिश्रयणं वा कुर्युः । पादः पञ्चघटीनां कुम्भद्रोणी निश्रेणीपरशुशूर्पाङ्कुशकचग्रहणीदृतीनां च अकरणे । तृणकटच्छन्नान्यपनयेत् । अग्निजीविन एकस्थान् वासयेत् । स्वगृहप्रद्वारेषु गृहस्वामिनो वसेयुः असंपातिनो रात्रौ । रथ्यासु कटव्रजास्सहस्रं तिष्ठेयुः । चतुष्पथद्वारे राजपरिग्रहेषु च । प्रदीप्तमनभिधावतो गृहस्वामिनो द्वादशपणो दण्डः । षट्पणोऽवक्रयिणः । प्रमादाद्दीप्तेषु चतुष्पञ्चाशत्पणो दण्डः । प्रादीपिकोऽग्निना वध्यः । पांसुन्यासे रथ्यायामष्टभागो दण्डः । पङ्कोदकसन्निरोधे पादः । राजमार्गे द्विगुणः । पुण्यस्थानोदकस्थानदेवगृहराजपरिग्रहेषु पणोत्तरा विष्टादण्डाः । मूत्रेष्वर्धदण्डाः । भैषज्यव्याधिभयनिमित्तमदण्ड्याः । मार्जारश्वनकुलसर्पप्रेतानां नगरस्यान्तरुत्सर्गे त्रिपणो दण्डः । खरोष्ट्राश्वतराश्वपशुप्रेतानां षट्पणः । मनुष्यप्रेतानां पञ्चाशत्पणः । मार्गविपर्यासे शवद्वारादन्यतश्शवनिर्णयने पूर्वस्साहसदण्डः । द्वाःस्थानां द्विशतम् । श्मशानादन्यत्र न्यासे दहने च द्वादशपणो दण्डः । विषण्णालिकमुभयतोरात्रं यामतूर्यं; तूर्यशब्दे राज्ञो गृहाभ्याशे सपादपणमक्षणताडनं प्रथमपश्चिमयामिकं मध्यमयामिकं द्विगुणं । बहिश्चतुर्गुणम् । शङ्कनीये देशे लिङ्गे पूर्वापदाने च गृहीतमनुयुञ्जीत । राजपरिग्रहोपगमने नगररक्षारोहणे च मध्यमस्साहसदण्डः । सूतिकाचिकित्सकप्रेतप्रदीपयाननागरिकतूर्यप्रेक्षाग्निनिमित्तममुद्राभिश्चाग्राह्याः । चाररात्रिषु प्रच्छन्नविपरीतवेषाः प्रव्रजिता दण्डशस्त्रहस्ताश्च मनुष्या दोषतो दण्ड्याः । रक्षिणामवार्यं वारयतां वार्यं चावारयतामक्षणद्विगुणो दण्डः । स्त्रियं दासीमधिमेहयतां पूर्वस्साहसदण्डः । अदासीं मध्यमः । कृतावरोधामुत्तमः । कुलस्त्रियं वधः । चेतनाचेतनिकं रात्रिदोषमशंसतो नागरकस्य दोषानुरूपोदण्डः । प्रमादस्थाने च । नित्यमुदकस्थानमार्गभूमिच्छन्नपथवप्रप्राकाररक्षावेक्षणं नष्टप्रस्मृतापसृतानां च रक्षणम् । बन्धनागारे च बालवृद्धव्याधितानाथानां च जातनक्षत्रपौर्णमासीषु विसर्गः । पुण्यशीलास्समयानुबद्धा वा दोषनिष्क्रयं दद्युः ।

दिवसे पञ्चरात्रे वा बन्धनस्थान् विशोधयेत् । कर्मणा कायदण्डेन हिरण्यानुग्रहेण वा ॥ अपूर्वदेशाधिगमे युवराजाभिषेचने । पुत्रजन्मनि वा मोक्षो बन्धनस्य विधीयते ॥ इत्यध्यक्षप्रचारे द्वितीयेऽधिकरणे नागरकप्रणिधिः षट्त्रिंशोऽध्यायः । आदितस्सप्तपञ्चाशः । एतावता कौटिलीयस्यार्थशास्त्रस्य अध्यक्षप्रचारो द्वितीयमधिकरणं समाप्तम् ।

---

# धर्मस्थीयं तृतीयाधिकरणम् ।

## अष्टपञ्चाशोऽध्यायः ।

### व्यवहारस्थापना विवादपदनिबन्धः ।

धर्मस्थास्त्रयस्त्रयोऽमात्या जनपदसन्धिसङ्ग्रहणद्रोणमुखस्थानीयेषु व्यावहारिकानर्थान् कुर्युः । तिरोहितान्तरगारनक्तारण्योपध्युपह्वरकृतांश्च व्यवहारान् प्रतिषेधयेयुः । कर्तुः कारयितुश्च पूर्वस्साहसदण्डः । श्रोतॄणामेकैकं प्रत्यर्धदण्डाः । श्रद्धेयानां तु द्रव्यव्यपनयः । परोक्षेणाधिकरणग्रहणमवक्तव्यकरा वा तिरोहितास्सिद्ध्येयुः । दायनिक्षेपोपनिधिविवाहयुक्ताः स्त्रीणामनिष्कासिनीनां व्याधितानां चामूढसंज्ञानामन्तरगारकृतास्सिद्ध्येयुः । साहसानुप्रवेशकलहविवाहराजनियोगयुक्ताः पूर्वरात्रव्यवहारिणां च रात्रिकृताः सिद्ध्येयुः । सार्थव्रजाश्रमव्याधचारणां मध्येष्वरण्यचराणामरण्यकृतास्सिद्ध्येयुः । गूढाजीविषु चोपधिकृतास्सिद्ध्येयुः । मिथस्समवाये चोपह्वरकृताः सिद्ध्येयुः । अतोऽन्यथा न सिद्ध्येयुः । अपाश्रयवद्भिश्च कृताः, पितृमता पुत्रेण पिता पुत्रवता निष्कुलेन भ्रात्रा, कनिष्ठेनाविभक्तांशेन, पतिमत्या पुत्रवत्या च स्त्रिया, दासाहितकाभ्यां, अप्राप्तातीतव्यवहाराभ्यां, अभिशस्तप्रव्रजितव्यङ्गव्यसनिभिश्चान्यत्र निसृष्टव्यवहारेभ्यः । तत्रापि क्रुद्धेनार्तेन मत्तेनोन्मत्तेनावगृहीतेन वा कृता व्यवहारा न सिद्ध्येयुः । कर्तृकारयितृश्रोतणां पृथग्यथोक्ता दण्डाः । स्वे स्वे तु वर्गे देशे काले च स्वकरणकृतास्सम्पूर्णचाराश्शुद्धदेशा दृष्टरूपलक्षणप्रमाणगुणास्सर्वव्यवहारासिद्ध्येयुः । पश्चिमं त्वेषां करणमादेशाधिवर्जं श्रद्धेयम् । इति व्यवहारस्थापना ।

संवत्सरमृतुं मासं पक्षं दिवसं करणमधिकरणमृणं वेदकावेदकयोः कृतसमर्थावस्थयोर्देशग्रामजातिगोत्रनामकर्माणि चाभिलिख्य वादिप्रतिवादिप्रश्नानर्थानुपूर्व्यान्निवेशयेत् । निविष्टांश्चावेक्षेत । निबद्धं पादमुत्सृज्यान्यं पादं सङ्क्रामति; पूर्वोक्तं पश्चिमेनार्थेन नाभिसन्धत्ते । परवाक्यमनभिग्राह्यमभिग्राह्यावतिष्ठते । प्रतिज्ञाय देशं " निर्दिश " इत्युक्ते न निर्दिशति । हीनदेशमदेशं वा निर्दिशतिनिर्दिष्टाद्देशादन्यदेशमुपस्थापयति । उपस्थिते देशेऽर्थवचनं "नैवम्" इत्यपव्ययते । साक्षिभिरवधृतं नेच्छति । असम्भाष्ये देशे साक्षिभिर्मिथस्सम्भाषते । इति परोक्तहेतवः ।

परोक्तदण्डः पञ्चबन्धः । स्वयंवादिदण्डो दशबन्धः । पुरुषभृतिरष्टांशः । पथिभक्तमर्घविशेषतः । तदुभयं नियम्यो दद्यात् । अभियुक्तो न प्रत्यभियुञ्जीत अन्यत्र कलहसाहससार्थसमवायेभ्यः । न चाभियुक्तेऽभियोगोऽस्ति । अभियोक्ता चेत् प्रत्युक्तस्तदहरेव न प्रतिब्रूयात्, परोक्तस्स्यात् । कृतकार्यविनिश्चयो ह्यभियोक्ता, नाभियुक्तः । तस्याप्रतिब्रुवतस्त्रिरात्रं सप्तरात्रमिति । अत ऊर्ध्वं त्रिपणावरार्ध्यं द्वादशपणपरं दण्डं कुर्यात् । त्रिपक्षादूर्ध्वमप्रतिब्रुवतः परोक्तदण्डं कृत्वा यान्यस्य द्रव्याणि स्युस्ततोऽभियोक्तारं प्रतिपादयेदन्यत्र वृत्त्युपकरणेभ्यः । तदेव निष्पततोऽभियुक्तस्य कुर्यात् । अभियोक्तुर्निष्पातसमकालः परोक्तभावः । प्रेतस्य व्यसनिनो वा साक्षिवचनाः सारम् । अभियोक्ता दण्डं दत्वा कर्म कारयेत्; आधिं वा सकामं प्रवेशयेत् । रक्षोघ्नरक्षितं वा कर्मणा प्रतिपादयेत् अन्यत्र ब्राह्मणादिति ।

चतुर्वर्णाश्रमस्यायं लोकस्याचाररक्षणात् । नश्यतां सर्वधर्माणां राजधर्मः प्रवर्तकः ॥ धर्मश्च व्यवहारश्च चरित्रं राजशासनम् । विवादार्थश्चतुष्पादः पश्चिमः पूर्वबाधकः ॥ अत्र सत्ये स्थितोधर्मो व्यवहारस्तु साक्षिषु । चरित्रं सङ्ग्रहे पुंसां राज्ञामाज्ञा तु शासनम् ॥ राज्ञः स्वधर्मस्स्वर्गाय प्रजा धर्मेण रक्षितुः । अरक्षितुर्वा क्षेप्तुर्वा मिथ्यादण्डमतोऽन्यथा ॥ दण्डो हि केवलो लोकं परं चेमं च रक्षति । राज्ञा पुत्रे च शत्रौ च यथादोषं समं धृतः ॥ अनुशासाद्धि धर्मेण व्यवहारेण

संस्थया । न्यायेन च चतुर्थेन चतुरन्तां महीं जयेत् ॥ संस्थया धर्मशास्त्रेण शास्त्रं वा व्यावहारिकम् । यस्मिन्नर्थे विरुध्येत धर्मेणार्थं विनिश्चयेत् ॥ शास्त्रं विप्रतिपद्येत धर्मन्यायेन केनचित् । न्यायस्तत्र प्रमाणं स्यात्तत्र पाठो हि नश्यति ॥

दृष्टदोषस्स्वयंवादः स्वपक्षपरपक्षयोः । अनुयोगार्जवं हेतुश्शपथश्चार्थसाधकः ॥ पूर्वोत्तरार्थव्याघाते साक्षिवक्तव्यकारणे । चारहस्ताच्च निष्पाते प्रदेष्टव्यः पराजयः ॥ इति धर्मस्थीये तृतीयाधिकरणे विवादपदनिबन्धः प्रथमोऽध्यायः । आदितोऽष्टपञ्चाशः ।

---

# एकोनषष्टितमोऽध्यायः ।



## विवाहसंयुक्ते विवाहधर्मः स्त्रीधनकल्प आधिवेदनिकम् ।

विवाहपूर्वो व्यवहारः । कन्यादानं कन्यामलङ्कृत्य ब्राह्मो विवाहः । सहधर्मचर्या प्राजापत्यः । गोमिथुनादानादार्षः । अन्तर्वेद्यामृत्विजे दानात् दैवः । मिथस्समवायात् गान्धर्वः । शुल्कादानादासुरः । प्रसह्यादानाद्राक्षसः । सुप्तादानात्पैशाचः । पितृप्रमाणाश्चत्वारः पूर्वे धर्म्याः । मातापितृप्रमाणाः शेषाः । तौ हि शुल्कहरौ दुहितुः । अन्यतराभावेऽन्यतरो वा । द्वितीयं शुल्कं स्त्री हरेत् । सर्वेषां प्रीत्यारोपणमप्रतिषिद्धम् । वृत्तिराबंध्यं वा स्त्रीधनम् । परद्विसाहस्रा स्थाप्या वृत्तिः । आबंध्यानियमः । तदात्मपुत्रस्नुषाभर्मणि प्रवासाप्रतिविधाने च भार्याया भोक्तुमदोषः । प्रतिरोधकव्याधिदुर्भिक्षभयप्रतीकारे धर्मकार्ये च पत्युः । सम्भूय वा दंपत्योर्मिथुनं प्रजातयोस्त्रिवर्षोपभुक्तं च धर्मिष्ठेषु विवाहेषु नानुयुञ्जीत । गान्धर्वासुरोपभुक्तं सवृद्धिकमुभयं दाप्येत । राक्षसपैशाचोपभुक्तं स्तेयं दद्यात् । इति विवाहधर्मः ।

मृते भर्तरि धर्मकामा तदानीमेवास्थाप्याभरणं शुल्कशेषं च लभेत । लब्ध्वा वाविन्दमाना सवृद्धिकमुभयं दाप्येत । कुटुम्बकामा तु श्वशुर पतिदत्तं निवेशकाले लभेत । निवेशकालं हि दीर्घप्रवासे व्याख्यास्यामः । श्वशुरप्रातिलोम्येन वा निविष्टा श्वशुरपतिदत्तं जीयेत । ज्ञातिहस्तादभिमृष्टाया ज्ञातयो यथागृहीतं दद्युः । न्यायोपगतायाः प्रतिपत्ता स्त्रीधनं गोपायेत् । पतिदायं विन्दमाना जीयेत । धर्मकामा भुञ्जीत । पुत्रवती विन्दमाना स्त्रीधनं जीयेत । तत्तु स्त्रीधनं पुत्रा हरेयुः ।

पुत्रभरणार्थं वा विन्दमाना पुत्रार्थं स्फातीकुर्यात् । बहुपुरुषप्रजानां पुत्राणां यथापितृदत्तं स्त्रीधनमवस्थापयेत् । कामकारणीयमपि स्त्रीधनं विन्दमाना पुत्रसंस्थं कुर्यात् । अपुत्रा पतिशयनं पालयन्ती गुरुसमीपे स्त्रीधनमायुःक्षयाद्भुञ्जीत । आपदर्थं हि स्त्रीधनं । ऊर्ध्वं दायादं गच्छेत् । जीवति भर्तरि मृतायाः पुत्रा दुहितरश्च स्त्रीधनं विभजेरन् । अपुत्रायाः दुहितरः । तदभावे भर्ता । शुल्कमन्वाधेयमन्यद्वा बन्धुभिर्दत्तं बान्धवा हरेयुः । इति स्त्रीधनकल्पः ।

वर्षाण्यष्टावप्रजायमानामपुत्रां वन्ध्यां चाकाङ्क्षेत । दश निन्दुं द्वादश कन्याप्रसविनीम् । ततः पुत्रार्थी द्वितीयां विन्देत । तस्यातिक्रमे शुल्कं स्त्रीधनमर्धं चाधिवेदनिकं दद्यात् । चतुर्विंशतिपणपरं च दण्डम् । शुल्कस्त्रीधनमशुल्कस्त्रीधनायास्तत्प्रमाणमाधिवेदनिकमनुरूपां च वृत्तिं दत्वा बह्वीरपि विन्देत । पुत्रार्था हि स्त्रियः । तीर्थसमवाये चासां यथाविवाहं पूर्वोढां जीवत्पुत्रां वा पूर्वं गच्छेत् । तीर्थगूहनागमने षण्णवतिर्दण्डः । पुत्रवतीं धर्मकामां वन्ध्यां निन्दुं नीरजस्कां वा नाकामामुपेयात् । न चाकामः पुरुषः । कुष्ठिनीमुन्मत्तां वा न गच्छेत् । स्त्री तु पुत्रार्थमेवंभूतं वोपगच्छेत् । नीचत्वं परदेशं वा प्रस्थितो राजकिल्बिषी । प्राणाभिहन्ता पतितस्त्याज्यः क्लीबोऽपि वा पतिः ॥ इति धर्मस्थीये तृतीयेऽधिकरणे विवाहसंयुक्ते विवाहधर्मः स्त्रीधनकल्प आधिवेदनिकं द्वितीयोऽध्यायः । आदित एकोनषष्टितमोऽध्यायः ।

---

# षष्टितमोऽध्यायः ।



## विवाहसंयुक्ते–शुश्रूषाभर्मपारुष्यद्वेषातिचारोपकारव्यवहारप्रतिषेधाश्च ।

द्वादशवर्षा स्त्री प्राप्तव्यवहारा भवति । षोडशवर्षः पुमान् । अत ऊर्ध्वमशुश्रूषायां द्वादशपणः स्त्रिया दण्डः पुंसो द्विगुणः । भर्मण्यायामनिर्दिष्टकालायां ग्रासाच्छादनं वाधिकं यथा पुरुषपरिवापं सविशेषं दद्यात् । निर्दिष्टकालायां तदेव संङ्ख्याय बन्धं च दद्यात् । शुल्कस्त्रीधनाधिवेदनिकानामनादने च । श्वशुरकुलप्रविष्टायां विभक्तायां वा नाभियोज्यः पतिः ॥ इति भर्म । "नग्ने विनग्ने न्यङ्गेऽपितृकेऽमातृके" इत्यनिर्देशेन विनयग्राहणम् ॥

वेणुदलरज्जुहस्तानामन्यतमेन वा पृष्ठे त्रिराघातः । तस्यातिक्रमे वाग्दण्डपारुष्यदण्डाभ्यामर्धदण्डाः । तदेव स्त्रिया भर्तरि प्रसिद्धमदोषाया ईर्ष्याया बाह्यविहारेषु द्वारेष्वत्ययो यथानिर्दिष्टः । इति पारुष्यं ॥

भर्तारं द्विषती स्त्री सप्तार्तवाऽन्यं कामयमाना तदानीमेव स्थाप्याभरणं निधाय भर्तारं अन्यया सह शयानमनुशयीत ॥ भिक्षुक्यन्वाधिज्ञातिकुलानामन्यतमे वा भर्ता द्विषन् स्त्रियमेकामनुशयीत॥ दृष्टलिङ्गे मैथुनापहारे सवर्णापसर्पोपगमे वा मिथ्यावादी द्वादशपणं दद्यात् ॥ अमोक्ष्या भर्तुरकामस्य द्विषती भार्या । भार्यायाश्च भर्ता । परस्परं द्वेषान्मोक्षः । स्त्रीविप्रकाराद्वा पुरुषश्चेन्मोक्षमिच्छेत् यथागृहीतमस्यै दद्यात् । पुरुषविप्रकाराद्वा स्त्री चेन्मोक्षमिच्छेत् नास्यै यथागृहीतं दद्यात् । अमोक्षो धर्मविवाहानामिति द्वेषः ।

प्रतिषिद्धा स्त्री दर्पमद्यक्रीडायां त्रिपणं दण्डं दद्यात् । दिवा स्त्रीप्रेक्षाविहारगमने षट्पणो दण्डः । पुरुषप्रेक्षाविहारगमने द्वादशपणः । रात्रौ द्विगुणः । सुप्तमत्ताप्रव्रजने भर्तुरादाने च द्वारस्य द्वादशपणः । रात्रौ निष्कासने द्विगुणः । स्त्रीपुंसयोर्मैथुनार्थेनाङ्गविचेष्टायां रहश्शीलसम्भाषायां वा चतुर्विंशतिपणः स्त्रिया दण्डः, पुंसो द्विगुणः । केशनीवीदन्तनखावलम्बनेषु पूर्वस्साहसदण्डः; पुंसो द्विगुणः । शङ्कितस्थाने सम्भाषायां च पणस्थाने शिफादण्डः; स्त्रीणां ग्राममध्ये चण्डालः पक्षान्तरं पञ्चशिफा दद्यात् । पणिकं वा प्रहारं मोक्षयेत् ॥ इत्यतिचारः ॥ प्रतिषिद्धयोः स्त्रीपुंसयोरन्योन्योपकारे क्षुद्रकद्रव्याणां द्वादशपणो दण्डः; स्थूलकद्रव्याणां चतुर्विंशतिपणः; हिरण्यसुवर्णयोश्चतुष्पञ्चाशत्पणः स्त्रिया दण्डः । पुंसो द्विगुणः । त एवागम्ययोरर्धदण्डाः । तथा प्रतिषिद्धपुरुषव्यवहारेषु च । इति प्रतिषेधः ।

राजद्विष्टातिचाराभ्यामात्मापक्रमणेन च । स्त्रीधनानीतशुल्कानामस्वाम्यं जायते स्त्रियः ॥ इति धर्मस्थीये विवाहसंयुक्ते शुश्रूषाभर्मपारुष्यद्वेषातिचारा उपकारव्यवहारप्रतिषेधाश्च तृतीयोऽध्यायः आदितष्षष्टितमः ।

---

# एकषष्टितमोऽध्यायः ।



## विवाहसंयुक्ते–निष्पतनं पथ्यनुसरणं ह्रस्वप्रवासः दीर्घप्रवासश्च ।

पतिकुलान्निष्पतितायाः स्त्रियाष्षट्पणो दण्डोऽन्यत्र विप्रकारात् । प्रतिषिद्धायां द्वादशपणः । प्रतिवेशगृहातिगतायाष्षट्पणः । प्रातिवेशिकभिक्षुकवैदेहकानामवकाशभिक्षापण्यादाने द्वादशपणो दण्डः । प्रतिषिद्धानां पूर्वः साहसदण्डः । परगृहातिगतायाश्चतुर्विंशतिपणः । परभार्यावकाशदाने शक्यो दण्डोऽन्यत्रापद्भ्यः । वारणाज्ञानयोर्निर्दोषः । पतिविप्रकारात् 'पतिज्ञातिसुखावस्थग्रामिकान्वाधिभिक्षुकीज्ञातिकुलानामन्यतमं पुरुषं गन्तुमदोषः" इत्याचार्याः । "सपुरुषं

वा ज्ञातिकुलं कुतो हि साध्वीजनस्य छलं सुखमेतदवबोद्धुम्" इति कौटिल्यः । प्रेतव्याधिव्यसनगर्भनिमित्तमप्रतिषिद्धमेव ज्ञातिकुलगमनम् । तन्निमित्तं वारयतो द्वादशपणो दण्डः । तत्रापि गूहमाना स्त्रीधनं जीयेत । ज्ञातयो वा छादयन्तः शुल्कशेषम् । इति निष्पतनम् ।

पतिकुलान्निष्पत्य ग्रामान्तरगमने द्वादशपणो दण्डः स्थाप्याभरणलोपश्च । गम्येन वा पुंसा सहप्रस्थाने चतुर्विंशतिपणः; सर्वधर्मलोपश्चान्यत्र भर्मदानतीर्थगमनाभ्याम् । पुंसः पूर्वः साहसदण्डः । तुल्यः श्रेयसः । पापीयसो मध्यमः । बन्धुरदण्ड्यः । प्रतिषेधेऽर्धदण्डः । पथिव्यन्तरे गूढदेशाभिगमने मैथुनार्थेन शङ्कितप्रतिषिद्धाभ्यां वा पथ्यनुसारेण सङ्ग्रहणं विद्यात् । तालावचरचारणमत्स्यबन्धकलुब्धकगोपालकशौण्डिकानामन्येषां च प्रसृष्टास्त्रीकाणां पथ्यनुसरणमदोषः । प्रतिषिद्धे वा नयतः पुंसः स्त्रियो वा गच्छन्त्यास्त एवार्धदण्डाः । इति पथ्यनुसरणम् ॥

ह्रस्वप्रवासिनां शूद्रवैश्यक्षत्रियब्राह्मणानां भार्यास्संवत्सरोत्तरं कालमाकांक्षेरन् अप्रजातास्संवत्सराधिकं प्रजाताः। प्रतिविहिताः द्विगुणं कालं; अप्रतिविहितास्सुखावस्था बिभृयुः; परं चत्वारि वर्षाण्यष्टौ वा ज्ञातयः; ततो यथादत्तमादाय प्रमुञ्चेयुः ॥

ब्राह्मणमधीयानं दशवर्षाण्यप्रजाताः; द्वादश प्रजाताः । राजपुरुषमायुःक्षयादाकाङ्क्षेत । सवर्णतश्च प्रजाता नापवादं लभेत । कुटुम्बर्द्धिलोपे वा सुखावस्थैर्विमुक्ता यथेष्टं विन्देत जीवितार्थमापद्गता वा । धर्मविवाहात्कुमारी परिगृहीतारमनाख्याय प्रोषितमश्रूयमाणं सप्ततीर्थान्याकाङ्क्षेत । संवत्सरं श्रूयमाणं आख्याय; प्रोषितमश्रूयमाणं पञ्चतीर्थान्याकाङ्क्षेत । दश श्रूयमाणं । एकदेशदत्तशुल्कं त्रीणि तीर्थान्यश्रूयमाणं; श्रूयमाणंसप्ततीर्थान्याकाङ्क्षेत । दत्तशुल्कं पञ्चतीर्थान्यश्रूयमाणं; दश श्रूयमाणम् । ततः परं धर्मस्थैर्विसृष्टा यथेष्टं विन्देत । तीर्थोपरोधो हि धर्मवध इति कौटिल्यः ।

दीर्घप्रवासिनः प्रव्रजितस्य प्रेतस्य वा भार्या सप्ततीर्थान्याकाङ्क्षेत । संवत्सरं प्रजाता । ततः पतिसोदर्यं गच्छेत् । बहुषु प्रत्यासन्नं धार्मिकं भर्मसमर्थं कनिष्ठमभार्यं वा । तदभावेप्यसोदर्यं सपिण्डं कुल्यं वा । आसन्नमेतेषां एष एव क्रमः—

एतानुत्क्रम्य दायादान् वेदने जारकर्मणि । जारस्त्रीदातृवेत्तारस्संप्राप्तास्सङ्ग्रहात्ययम् । इति धर्मस्थीये विवाहसंयुक्ते निष्पतनं पथ्यनुसरणं ह्रस्वप्रवासः दीर्घप्रवासश्च चतुर्थोऽध्यायः । विवाहसंयुक्तं समाप्तम् । आदित एकषष्ठितमः ।

---

## द्विषष्टितमोऽध्यायः ।



### दायविभागे-दायक्रमः ।

अनीश्वराः पितृमन्तस्स्थितपितृमातृकाः पुत्राः । तेषां ऊर्ध्वं पितृतो दायविभागः पितृद्रव्याणां । स्वयमार्जितमविभाज्यं अन्यत्र पितृद्रव्यादुत्थितेभ्यः । पितृद्रव्यादविभक्तोपगतानां पुत्राः पौत्रा वा आचतुर्थादित्यंशभाजः । तावदविच्छिन्नः पिण्डो भवति । विच्छिन्नपिण्डास्सर्वे समं विभजेरन् । अपितृद्रव्या विभक्तपितृद्रव्या वा सहजीवन्तः पुनर्विभजेरन् । यतश्चोत्तिष्ठेत स द्व्यंशं लभेत । द्रव्यमपुत्रस्य सोदर्या भ्रातरः सहजीविनो वा हरेयुः कन्याश्च । रिक्थम् पुत्रवतः पुत्रा दुहितरो वा धर्मिष्ठेषु विवाहेषु जाताः । तदभावे पिता धरमाणः; पित्रभावे भ्रातरो भ्रातृपुत्राश्च । अपितृका बहवोऽपि च भ्रातरो भ्रातृपुत्राश्च पितुरेकमंशं हरेयुः । सोदर्याणामनेकपितृकाणां पितृतो दायविभागः । पितृभ्रातृपुत्राणां पूर्वे विद्यमाने नापरमवलम्बन्ते । ज्येष्ठे च कनिष्ठमर्थग्राहिणः ।

जीवद्विभागे पिता नैकं विशेषयेत् । न चैकमकारणान्निर्विभजेत । पितुरसत्यर्थे ज्येष्ठाः कनिष्ठाननुगृह्णीयुः अन्यत्र मिथ्यावृत्तेभ्यः । प्राप्तव्यवहाराणां विभागः । अप्राप्तव्यवहाराणां देयविशुद्धं मातृबन्धुषु ग्रामवृद्धेषु वा स्थापयेयुर्व्यवहारप्रापणात् । प्रोषितस्य वा । सन्निविष्टसममसन्निविष्टेभ्यो नैवेशनिकं दद्युः । कन्याभ्यश्च प्रादानिकम् । ऋणरिक्थयोस्समो विभागः । "उदपात्राण्यपि निष्किञ्चना विभजेरन्' इत्याचार्याः । 'छलमेतदिति' कौटिल्यः । सतोऽर्थस्य विभागो नासतः ।

